*Advaita Grantha Ratna Manjusha—Ratna 32*



# VEDĀNTA-SANDARBHA

## (A COLLECTION OF SELECTED VEDANTIC TEXTS)

*Under direction from*

**MAHAMANDALESHWAR SHRI SWAMI**
**MAHESHANAND GIRI JI MAHARAJ**
**Pontiff of Shri Dakshinamurti Math**

**Mahesh Research Institute**

**Mount Abu** **Varanasi**

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अद्वैतग्रन्थरत्नमञ्जूषा—३२वाँ रत्न




# वेदान्तसन्दर्भ

श्रीदक्षिणामूर्तिपीठाधीश्वर आचार्य महामण्डलेश्वर
श्री स्वामी महेशानन्दगिरि जी महाराज
के निर्देशानुसार
वेदान्तपरक विशिष्ट ग्रंथों व प्रकरणों का संकलन

*महेश-अनुसन्धान-संस्थानम्*

माउण्ट आबू वाराणसी

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

प्रकाशक

महेश-अनुसन्धान-संस्थानम्

श्री शङ्कर मठ
माउण्ट आबू–३०७५०१
( राजस्थान )

श्री दक्षिणामूर्ति मठ
डी ४९/९, मिश्र पोखरा
वाराणसी–२२१०१०

सर्वाधिकार प्रकाशकाधीन

प्रथम आवृत्ति

इस आवृत्ति की ५००० प्रतियाँ
प्रयाग कुम्भमहापर्व के अवसर पर
बिशनदास गिरधारीलाल रिलीजियस ट्रस्ट, दिल्ली
के सौजन्य से निःशुल्क वितरित

भगवत्पादाब्द : १२००
विक्रम संवत् : २०४५
ख्रिस्ताब्द : १९८९

मुद्रक
तारा प्रिंटिंग वर्क्स, वाराणसी

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# प्राक्कथन

भगवत्पूज्यपाद श्री शङ्कराचार्य ने तीन दुर्लभ बातों का उल्लेख करते हुए उनमें से भी प्रथम स्थान दिया है मनुष्यत्व को। 'मनुष्यत्वं मुमुक्षुत्वं महापुरुषसंश्रयः' (विवेकचूडामणि ३) के क्रम पर ध्यान दें तो एक बात निश्चित कही जा सकती है कि यदि प्रथम की प्राप्ति हो चुकी है, तो अन्य दो दुर्लभ पदार्थों की उपपत्ति की संभावना तो उसी में बीजाङ्कुरन्याय से निहित है। यदि हम मनुष्य हैं, तो हमारे जीवन में मुमुक्षा को भी स्थान मिल सकता है और महापुरुषसंश्रय को भी। मनुष्य होना मात्र हमें तत्त्वज्ञान का अधिकारी बना देता है। शंका उठ सकती है कि साधनचतुष्टयसम्पन्न व्यक्ति को ही ब्रह्मानुभूति का अधिकारी माना है। यह तो निःसंशय है कि साधन-चतुष्टयसम्पन्न व्यक्ति ही ब्रह्मानुभूति का अधिकारी है परन्तु साधन-संपन्न होने का अधिकार तो मनुष्यमात्र को प्राप्त है। ईश्वर की दृष्टि में भी ब्रह्मानुभूति की योग्यता मनुष्य में ही है—

सृष्ट्वा पुराणि विविधान्यजयात्मशक्त्या
वृक्षान् सरीसृपपशून् खगदंशमत्स्यान्।
तैस्तैरतुष्टहृदयः पुरुषं विधाय
ब्रह्मावलोकधिषणं मुदमाप देवः॥
(श्रीमद्भागवत ११-९-२८)

वृक्ष, रेंगनेवाले कीड़े, पशु, पक्षी—ये सभी जीव केवल ऐन्द्रियक विषयों को ही जानते हैं, किन्तु अतीन्द्रिय आत्मतत्त्व के दर्शन का जो साधन है—प्रमाणवृत्ति, वह तो मनुष्य के अतिरिक्त अन्य किसी प्राणी के पास नहीं है। अन्य जीवों के पास न तो साधन-चतुष्टय का अभ्यास है, न उनके पास वेद-शास्त्रादि का श्रवण है, न तो 'अहं ब्रह्मास्मि' इत्याकारक वृत्ति का उदय होने की कोई सामग्री उनके पास है।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

दूसरी बात यह कि अद्वैत-तत्त्व कभी साधनसाध्य नहीं है, वह तो सिद्ध वस्तु है। शास्त्रोक्त सभी साधनों का प्रयोजन मोक्ष-सम्पादिका प्रमाणवृत्ति के भी आश्रयभूत अन्तःकरण की निवृत्ति में है, सीधे ब्रह्मज्ञान की उत्पत्ति में नहीं। अतः साधनों को केवल औषधवत् स्वीकार करना इष्ट है, स्वास्थ्यवत् नहीं। रोगानिवृत्ति के पश्चात् साधन त्याज्य हो जाते हैं। साधन से पूर्व और साधन के पश्चात् जो हमारा अपना आपा है, हमारी स्व-स्थता है, वह तो ज्यों-की-त्यों विद्यमान है। केवल अपने वास्तविक स्वरूप की अज्ञता का नाश ही स्वतःसिद्ध ज्ञातता को अनावृत्त कर देता है। साधन ब्रह्म को दिखाने के लिये नहीं हैं, केवल प्रमाण को सुधारने के लिये हैं। विवेकादि साधनचतुष्टय बहिरङ्ग साधन हैं। अन्तःकरण में स्थित अविवेक, आसक्ति आदि दोषों को नष्ट करनेवाले होने से इन्हें करण-शोधक साधन माना जाता है। दोष जिस अन्तःकरण में निवास करते हैं, उस अन्तःकरण की सफाई के लिये उसी में इन साधनों की स्थिति है। इनमें बाह्य पदार्थ, क्रिया अथवा भावना नहीं है। ये निवृत्तिरूप हैं। फिर भी ये केवल अन्तःकरण के शोधक है, वस्तु-तत्त्व के बोधक नहीं हैं। वस्तु के स्वरूप को लक्ष्य करने वाले श्रवण, मनन और निदिध्यासन ये तीनों साधन अन्तरङ्ग साधन कहलाते हैं। गुरुमुख से, सत्सम्प्रदाय की पद्धति से, वेदान्तों में जो तत् और त्वम् पदार्थों की एकता का निश्चय है, वह 'श्रवण' कहलाता है। तत्पश्चात् जैसा सुना है, उसके द्वारा भेदबाधक और अभेदसाधक युक्तियों से ब्रह्म का चिन्तन करना 'मनन' है। तदनन्तर निश्चय किये हुए अद्वैतार्थ में बुद्धिवृत्ति का प्रवाह और विजातीय वृत्तियों का तिरस्कार, यह 'निदिध्यासन' कहलाता है। परन्तु श्रवण, मनन और निदिध्यासन भी ज्ञान के साक्षात् साधन नहीं हैं। श्रवण से प्रमाणगत संशय की निवृत्ति होती है तो मनन से प्रमेयगत असंभावना दूर होती है। फिर भी पूर्व-पूर्व के आविद्यक अभ्यास के कारण देहादि जागतिक पदार्थों

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

की सत्यता और ब्रह्म की अन्यता का भ्रम पुनः पुनः उपस्थित हो जाता है। इस विपरीतबुद्धि या विपर्यय का निराकरण निदिध्यासन से होता है। प्रतिबन्धरहित साधक श्रवणमात्र से कृतकृत्य हो जाता है परन्तु जिन साधकों में संशय-विपर्ययरूप प्रतिबन्ध शेष हैं, उन्हें मनन और निदिध्यासन की आवश्यकता रहती है। केवल एक ही बार में प्रमाण स्वच्छ होने पर तथा प्रमाण-प्रमेय का निर्विघ्न सम्बन्ध होने पर आत्मतत्त्व का ज्ञान हो जाता है। प्रतिबन्धों के कारण ज्ञान के दार्ढ्य के अभाव में आवृत्ति की आवश्यकता होती है। भगवत्पूज्यपाद श्री शङ्कराचार्य ने ब्रह्मसूत्र के 'आवृत्तिः असकृदुपदेशात्' (४.१.१) भाष्य में यह बात कही है।

विवेकादि बहिरङ्ग साधनों का आश्रय लेकर जब साधक करणशुद्धि कर लेता है, तब तो तत्पदार्थ और त्वम्पदार्थ की एकता में कोई प्रतिबन्ध ही नहीं रहता। अन्तःकरण की शुद्धि के विषय में भगवती श्रुति कहती है— 'आहारशुद्धौ सत्त्वशुद्धिः' (छान्दोग्य० ७.२६.२) अर्थात् आहार की शुद्धि से अन्तःकरण की शुद्धि होती है। 'आह्रियत इत्याहारः शब्दादिविषयज्ञानम्' अर्थात् भोक्ता के भोग के लिये जो भी शब्द-स्पर्श-रूप-रस-गन्ध का ज्ञान है, वह सब आहार है, ऐसी भगवत्पूज्यपाद आचार्य की उक्ति है। जिस शब्द का श्रवण करें, जिस ग्रंथ का पाठ करें, वह यदि सात्त्विक है, शुद्ध है, तो उससे प्राप्त संस्कार निश्चय ही अन्तःकरण की शुद्धि में साधक होंगे। शास्त्रीय ग्रंथ सत्य में कोई विशेषण नहीं लगाते। जितने भी विशेष अथवा भेद हैं, वे दृश्य ही हैं, अतः वाद के विषय हो सकते हैं। निर्विशेषता ही सद्वस्तु की अद्वितीयता है। यह अद्वितीयता अन्यनिष्ठ नहीं हो सकती क्योंकि 'वह' या 'यह' को अद्वितीय मानने पर आत्मा उससे पृथक् उसका प्रकाशक रह जायेगा। आत्मा में अद्वितीयता या पूर्णता विशेषण नहीं हैं, स्वरूप ही है; अथवा यों कहें कि अपूर्णता और सद्वितीयता के भ्रम को निवृत्त करने के लिये शास्त्रों द्वारा आत्मा का यह वर्णन भी अध्यारोपित है। आत्मा व

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अनात्मा का भेद अर्थात् अपनी सत्ता से पृथक् किसी भी सत्ता की कल्पना व्यक्तित्वमूलक ही है। व्यक्तित्व का अभिमान ही द्वैतबुद्धि को उत्पन्न करता है। यह अभिमान परमार्थ सत्य के अज्ञान से ही है। इस अज्ञान की निवृत्ति के लिये ही शास्त्रों का अश्रान्त परिश्रम रहा है।

साधनचतुष्टयसम्पन्न व्यक्ति ही वेदान्त-श्रवण का अधिकारी है ऐसा आग्रह रखने पर यह भी शंका उपस्थित हो सकती है कि ऐसे साधनसम्पन्न मुमुक्षु अधिकारी के अभाव में वेदान्त-विद्या का विचार, पठन, पाठन सब बेकार है। जिनके लिये 'असाधक' शब्द का प्रयोग किया जाता है, उनकी मनोवृत्ति का विश्लेषण करना भी उचित होगा। असाधक वह है, जो विषयसुख चाहता है। अब प्रश्न यह है कि क्या ऐसा प्रत्येक व्यक्ति विषयसुख ही चाहता है? यह कहना तो ठीक नहीं होगा। वास्तव में लोग सुखमात्र को चाहते हैं। इन्द्रियजन्य ज्ञान के आधार पर विषयसुख का तो प्रत्येक को अनुभव है और व्यक्ति की स्वाभाविक सुखेच्छा उसे विषयों की ओर खींच ले जाती है। रात-दिन के प्रत्यक्ष प्रपञ्च में जब उसे विषयों में ही सुख का आभास हो रहा है तो वह तदतिरिक्त अन्य किसी मार्ग का अवलंब क्यों करेगा? सब चाहते हैं कि सुख मिले, वह सुख भी सदा मिले, सर्वत्र मिले, बिना श्रम किये मिले और सब से मिले। भले वह विषय से प्राप्त होता हो या निर्विषयक हो। वस्तुतः ऐसा विलक्षण सुख तो ब्रह्मानन्द या मोक्षसुख ही है परन्तु अज्ञान के वशीभूत होकर वह उस सुख को विनाशी, परिच्छिन्न और अनात्म विषयों में ढूंढता है। इस प्रकार वेदान्त की दृष्टि से प्रत्येक मनुष्य मुमुक्षु है, चाहे उसे इसका ज्ञान हो या न हो।

संसार में चार प्रकार के लोग हैं—पामर, विषयी, जिज्ञासु और मुक्त। इन में से पामर वे हैं, जो पशुओं का-सा आहार, निद्रा, भय और मैथुन का भोग भोगने में ही अपने पुरुषार्थ की इतिश्री समझते हैं। विषयी लोग शास्त्रीय बातों को जानते तो हैं परन्तु शास्त्रानुसार इस लोक और परलोक के सुखभोगों का सम्पादन करने और उन्हें भोगने के

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

उद्देश्य से शास्त्र के अनुसार धर्म का पालन करने में ही इनकी रुचि होती है। ये लोग वेदान्त के फल को चाहते नहीं। मुक्त पुरुषों का तो मोक्षरूप प्रयोजन सिद्ध हो चुका है। इन सब से अतिरिक्त जो बहुत सारे जिज्ञासु बचते हैं, वे सब के सब भले ही साधनचतुष्टयसम्पन्न नहीं हैं, परन्तु उनकी विषयसुख में अलंबुद्धि नहीं होती। उन्हें तो विषय के अर्जन में, भोग में और परिणाम में प्रतीत होनेवाला सारा सुखाभास कहीं-न-कहीं खटकता है। ऐसे सभी जिज्ञासु तो निश्चित् ही वेदान्त-विद्या के विचार के, व्याख्यान के अधिकारी हैं।

वेदान्त का प्रतिपादन करनेवाले सभी ग्रंथों में आत्मा और ब्रह्म की स्वतःसिद्ध एकता का ज्ञान है। इसके लिये उपनिषदों में दो प्रकार के वाक्य पाये जाते हैं। जो वाक्य आत्मा के और ब्रह्म के स्वरूप का और जगत् की प्रतीति का अलग-अलग वर्णन करते हैं, वे सब अवान्तर वाक्य हैं। आत्मा और ब्रह्म की एकता का वर्णन करनेवाले वाक्य महावाक्य कहलाते हैं। देहसम्बन्धी, साधन-फलसम्बन्धी या सृष्टि की उत्पत्ति-स्थिति-लय के विषयक सारा विवेचन अवान्तर वाक्यों की श्रेणी में ही आयेगा। शुद्धान्तःकरण साधनचतुष्टयसम्पन्न मुमुक्षु तो महावाक्य-श्रवण का अधिकारी है। परन्तु अवान्तर वाक्य ब्रह्मात्मैक्यप्रतिपादक न होने से निरर्थक व निष्फल तो नहीं ही हैं। सामान्य जिज्ञासु इन वाक्यों का विचार करने से उत्पन्न बुद्धिवृत्ति का अन्तःकरण के शोधन में उपयोग कर सकता है।

श्रुति का कथन है 'तत्त्वमसि' अर्थात् तुम आत्मा देश-काल-वस्तु से अपरिच्छिन्न अद्वितीय ब्रह्म हो। परन्तु प्रत्येक व्यक्ति का प्रत्यक्ष अनुभव तो यह है कि हम देह हैं, उत्पन्न हुए हैं, बढ़ हुए हैं; घिस रहे हैं और एक दिन मर भी जायेंगे। व्यक्ति अपने को वर्ण और आश्रमों में विभाजित पाता है। उसे कोई मित्र लगता है तो कोई शत्रु। श्रुत्युक्त ब्रह्मात्मैक्य तो प्रत्यक्ष ज्ञान से विपरीत होने के कारण सन्देहास्पद लगने लगता है। परन्तु श्रुति प्रत्यक्ष के विरुद्ध तो प्रमाण नहीं है।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

भगवत्पूज्यपाद श्री शंकराचार्य तो स्पष्ट घोषणा करते हैं—'नहि श्रुति-शतैरपि घटः पटो भवितुं शक्यः। श्रुति के प्रतिपादन में और प्रत्यक्ष में जो विरोध प्रतीत होता है, उस का परिहार आवश्यक है। यहीं पर वेदान्तग्रंथों के अवान्तर वाक्यों की सार्थकता है। जिस प्रत्यक्ष ज्ञान को हम महत्त्व दे रहे हैं, उस की भ्रमात्मकता का इन के विचार से निश्चय हो सकेगा। हम यदि साधनचतुष्टयसम्पन्न नहीं हैं, तो उस सम्पन्नता की प्राप्ति कर अन्तःकरण का शोधन करने के लिये और यदि हम साधनसम्पन्न होकर श्रवण के वाद भी किञ्चित् प्रतिवन्धों के कारण मनन व निदिध्यासन के योग्य हैं—दोनों दशाओं में ऐसे ग्रंथों का चिन्तन लाभप्रद होगा।

भगवत्पूज्यपाद श्री शंकराचार्य ने प्रस्थानत्रयी के भाष्य के अतिरिक्त बहुत से ऐसे ग्रंथों का प्रणयन किया, जिन्हें औपनिषदिक अवान्तर वाक्यों की कोटि में रखा जा सकता है। उनके परवर्ती अनेक महापुरुषों ने भी आत्मा का स्वरूप, ब्रह्म का स्वरूप, जगत् की भ्राजमानना आदि का पार्थक्य से विशद विवेचन किया है। वेदान्तप्रतिपादक विभिन्न प्रक्रियाओं की भी कुंजी इन स्फुट प्रकरण-ग्रंथों में मिल जाती है। परवर्ती महापुरुषों के बहुत-से ग्रंथ क्षेत्रविशेष में प्रचलित हैं तो अनेक लुप्तप्राय हैं। संकलित कुछ प्रकरणों के अद्यतन संस्करण अस्सी-नव्वे वर्ष पूर्व छपे थे। सर्वसामान्यतः यह अपेक्षा की जाती कि इन ग्रंथों की व्याख्या, कम-से-कम भाषानुवाद उपलब्ध कराया जाता। परन्तु समयाभाव के साथ-साथ ग्रंथ का कलेवर भी रोधक बना। मूल संस्कृत पाठ तो एक बार छाप दिये जायं, जिससे कि कई ग्रंथों का लुप्त होने से बचाया जा सके, इसी हेतु से ६०० से भी अधिक पृष्ठों के इस संस्करण का स्वरूप संकलनमात्र रखा गया है। प्रस्तुत संकलन में भगवत्पूज्यपाद श्रीशङ्कराचार्य के कुछ महत्त्वपूर्ण प्रकरणों के साथ अन्य अनेक ज्ञात व अज्ञात महापुरुषों के शब्दबद्ध प्रकरणों के रूप में प्रकट

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

हुए आत्मानुभूति के हुंकार जिज्ञासुओं के उपयोगार्थ एकत्रित किये हैं। इस संकलन के पीछे मूल कल्पना हमारे समादरणीय श्री स्वामी स्वयंप्रकाशगिरि जी की रही। परमपूज्य प्रातःस्मरणीय श्री १०८ स्वामी महेशानन्द गिरि जी महाराज के आशीर्वाद एवं प्रेरणा से ही यह कल्पना इतने कम समय में साकार हो सकी। पूज्य महाराजश्री जी के कृपापात्र भक्त श्री विशनदास जी मेहता तो सारा आर्थिक भार स्वयं वहन कर इस संकलन की सहस्रावधि प्रतियों को प्रयाग कुम्भमहापर्व के अवसर पर वेदान्तस्वाध्यायरत जिज्ञासुओं में वितरित करने को उद्यत हुए। तारा मुद्रणालय के श्री रमाशङ्कर जी पण्ड्या एवं उनके सुपुत्र श्री रवि पण्ड्या का सहयोग एवं पुरुषार्थ ही इस पुस्तक को महिने भर की अल्पावधि में मुद्रित करवा पाया।

विश्वास है कि जिज्ञासुजन इस पुस्तक से लाभान्वित होकर इस प्रयास को सार्थक करेंगे। शेष भगवत्कृपा।

भवत्कीय

निश्चलानन्द सरस्वती

श्रीदक्षिणामूर्ति मठ
वाराणसी

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

## अनुक्रमणिका



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

## रुद्र

### (पंचम नमकाध्याय)

हरिः ॐ नमस्ते रुद्र मन्यव उतो त इषवे नमः ॥
बाहुभ्यामुत ते नमः ॥ १ ॥

या ते रुद्र शिवा तनूरघोराऽपापकाशिनी ॥
तया नस्तन्वा शन्तमया गिरिशन्ताभिचाकशीहि ॥ २ ॥

यामिषुं गिरिशन्त हस्ते बिभर्ष्यस्तवे ॥
शिवां गिरित्र तां कुरु मा हिंसीः पुरुषं जगत् ॥ ३ ॥

शिवेन वचसा त्वा गिरिशाच्छा वदामसि ॥
यथा नः सर्वमिज्जगदयक्ष्मं सुमना असत् ॥ ४ ॥

अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक् ॥
अहींश्च सर्वाञ्जम्भयन्त्सर्वाश्च यातुधान्योऽधराचीः परासुव
॥ ५ ॥

असौ यस्ताम्रो अरुण उत बभ्रुः सुमङ्गलः ॥
ये चैनं रुद्रा अभितो दिक्षु श्रिताः सहस्रशोऽवैषां हेड ईमहे ॥ ६ ॥

असौ योऽवसर्पति नीलग्रीवो विलोहितः ॥
उतैनं गोपा अदृश्रन्नदृश्रन्नुदहार्यः स दृष्टो मृडयाति नः ॥ ७ ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

नमो'स्तुनील॑ग्ग्रीवायसहस्राक्षाय॑मी॒ढुषे' ॥
अथो॒येऽअ॑स्यसत्त्वा॑नो॒ऽहन्तेभ्यो'करन्नम॑ः ॥ ८ ॥

प्रमु'ञ्च॒धन्न्वं॑नस्त्वमु भयो॒रात्न्य॑ोंर्ज्ज्याम् ॥
याश्च्चं॑ते॒ हस्त॒ऽइषं॑व॒ः परा॒ताभ॑गवोव्वप ॥ ९ ॥

व्विज्ज्यन्धनु'ः कप॒र्द्दिनो॒व्विश॑ल्ल्यो॒बाण॑वाँ२॥ऽउ॒त ॥
अने'शन्नस्य॒याऽइषं॑वऽआभु र॑स्यनिषङ्ग॒धिः ॥ १० ॥

याते'हे॒तिम्मी॑ढुष्ट्टम॒हस्ते'ब॒भूवं॑ते॒ धनु'ः ॥
तया॒स्म्मान्न्वि॒श्श्वत॒स्त्वम॑य॒क्ष्म्मय॒ापरि॑भुज ॥ ११ ॥

परि॑ते॒ धन्न्वं॑नोहे तिर॒स्मान्न्वृं॑णक्तुव्वि॒श्श्वत॑ः ॥
अथो॒यऽ इं॑षुधिस्तवा॒रेऽअस्म्मन्निधे'हितम् ॥ १२ ॥

अव॒तत्य॒धनु॒ ष्ट्वꣳसह॑स्राक्ष॒शते'षुधे ॥
नि॒शीर्य्यं॑ श॒ल्याना॒म्मुखा'शि॒वोन॑ः सुमना॑भव ॥ १३ ॥

नम॑स्त॒ऽआयु'धायाना॑तताय धृ॒ष्ष्णवे' ॥
उ॒भाब्भ्यां॑मु॒ तते॒ नमो'बा॒हुब्भ्या॒न्तव॒धन्न्वं॑ने ॥ १४ ॥

मानो'म॒हान्त॑मु॒ तमानो'ऽअब्भ॒'कम्मा॒नऽउक्षन्तमु॒ तमान॑ऽउक्षि॒तम् ॥
मानो'व्वधीः पि॒तर॒म्मोत॑मा॒तर॒म्मान॑ः प्प्रि॒यास्त॒न्न्वोरुद्द्ररीरिषः
॥ १५ ॥

मान॑स्तो॒केतन॑ये॒ मान॒ऽआयु'षि॒मानो॒गोषु॒ मानो॒ऽअश्श्वे॑षुरीरिषः ।
मानो'व्वीरान्रु'द्रभामिनो'व्वधीर्हविष्म्म॑न्त॒ःसदमित्त्वा॑हवामहे ॥१६॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

नमो॒हिर॑ण्यबाहवे सेना॒न्येदि॒शाञ्च॒पत॑ये॒ नमो॒ नमो॑व्वृ॒क्षेभ्यो॒हरि॑-केशेभ्यः॒ पशू॒नाम्पत॑ये॒ नमो॒नम॑ः॒ शष्पिञ्ज॑राय॒त्त्विषी॑मतेपथी॒ना-म्पतये॒ नमो॒नमो॒ हरि॑केशायोपवी॒तिने॑ पु॒ष्टाना॒म्पत॑ये॒ नमो॒नमो॑-बभ्लु॒शाय॑ ॥ १७ ॥

नमो॑ बभ्लु॒शाय॑ व्व्या॒धिनेऽन्ना॑ना॒म्पत॑ये॒ नमो॒नमो॑भ॒वस्य॑हे॒त्यै-जग॑ता॒म्पत॑ये॒ नमो॒नमो॑रु॒द्रायात॑ता॒यिने॒ क्षेत्रा॑णा॒म्पत॑ये॒ नमो॒नम॑ः॒ सू॒तायाह॑न्त्यै॒ व्वना॑ना॒म्पत॑ये॒ नमो॒नमो॒ रोहि॑ताय ॥ १८ ॥

नमो॒रोहि॑ताय स्थ॒पतये व्वृ॒क्षाणा॒म्पत॑ये॒ नमो॒नमो॑भुव॒न्तये॑ व्वारिव-स्कृ॒तायौष॑धीना॒म्पत॑ये॒ नमो॒नमो॑म॒न्त्रिणे॑ व्वाणि॒जाय॒कक्षा॑णा॒म्पत॑ये॒ नमो॒नम॑ऽउ॒च्चैर्घो॑षायाक्र॒न्दय॑तेपत्ती॒नाम्पत॑ये॒ नमो॒नम॑ः॒ कृत्स्ना-य॒तया॑ ॥ १९ ॥

नम॑ः॒ कृत्स्नाय॒तया॒धाव॑ते॒ सत्व॑ना॒म्पत॑ये॒ नमो॒नम॒ः॒ सह॑मानायनिव्व्या धिन॑ऽआव्व्याधिनी॑ना॒म्पत॑ये॒ नमो॒नमो॑निष॒ङ्गिणे॑ककु॒भाय॑स्ते॒ नाना-म्पत॑ये॒ नमो॒ नमो॑निचे॒रवे॑परिचरायार॑ण्याना॒म्पत॑ये॒ नमो॒ नमो॒-व्वञ्च॑ते ॥ २० ॥

नमो॒व्वञ्च॑तेपरि॒वञ्च॑तेस्तायू॒नाम्पत॑ये॒ नमो॒नमो॑निष॒ङ्गिण॑ऽइषुधि॒मते॒ तस्क॑राणा॒म्पत॑ये॒ नमो॒नम॑ः॒ सृका॒यिभ्यो॒ जिघा॑ꣳसद्भ्योमुष्ण-ताम्प॑तये॒ नमो॒नमो॑ऽसि॒मद्भ्योनक्त॒ञ्चर॑द्भ्योव्विकृ॒न्ताना॒म्पत॑ये॒ नम॑ः ॥ २१ ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

नमः उष्णीषिणे गिरिचरायकुलुञ्चानाम्पतये नमोनमः इषु मद्भ्यो-धन्वायिभ्यश्चवोनमोनमः आतन्वानेभ्यः प्रतिदधानेभ्यश्च-वो नमो नमः आयच्छद्भ्योस्य दभ्यश्चवोनमोनमो विसृजद्भ्यः
॥ २२ ॥

नमो विसृ जद्भ्योविद्ध्यद्भ्यश्चवोनमोनमः स्वपदभ्योजाग्र-द्भ्यश्चवोनमोनमः शयानेभ्य आसीनेभ्यश्चवोनमोनमस्तिष्ठ-द्भ्यो धावद्भ्यश्चवोनमोनमः सभाभ्यः॥ २३ ॥

नमः सभाभ्यः सभापतिभ्यश्चवोनमो नमोऽश्वेभ्योऽश्वपति-भ्यश्चवोनमोनमः आव्याधिनीभ्योविविद्ध्यन्तीभ्यश्चवोनमो-नमः उगणाभ्यस्तृहतीभ्यश्चवोनमो नमो गणेभ्यः॥ २४ ॥

नमो गणेभ्यो गणपतिभ्यश्चवोनमोनमोव्रातेभ्योव्रातपति-भ्यश्चवोनमोनमोगृत्सेभ्योगृत्सपतिभ्यश्चवोनमोनमोविरूपे-भ्योविश्वरूपेभ्यश्च वोनमोनमः सेनाभ्यः ॥ २५ ॥

नमः सेनाभ्यः सेनानिभ्यश्चवोनमोनमो रथिभ्यो अरथेभ्यश्चवो-नमोनमः क्षत्तृभ्यः सङ्ग्रहीतृभ्यश्चवोनमोनमो महद्भ्यो अर्भ-केभ्यश्चवोनमः॥ २६ ॥

नमस्तक्षभ्योरथकारेभ्यश्चवोनमोनमः कुलालेभ्यः कर्मारेभ्य-श्चवोनमोनमो निषादेभ्यः पुञ्जिष्ठेभ्यश्चवोनमोनमः श्वनिभ्यो-मृगयुभ्यश्चवोनमोनमः श्वभ्यः॥ २७ ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

नम॒ ᳚ श्वभ्य॒ ᳚ श्वप॑तिभ्यश्श्च॒वोनम॒ोनमो॑ भ॒वाय॑चरु॒द्राय॑च॒नम॑ ᳚ शर्वाय॑चपशु॒पत॑येच॒नम॒ोनील॑ग्रीवायचशिति॒कण्ठा॑यच॒नम॑ ᳚ कप॒र्द्दिने॑ ॥ २८ ॥

नम॑ ᳚ कप॒र्दिने॑चव्व्यु॒प्तकेशायच॒नम॑ ᳚ सहस्रा॒क्षाय॑चश॒तधन्न्वने च॒नमो॑गिरिश॒याय॑चशिपिव्वि॒ष्टाय॑च॒नमो॑ मी॒ढुष्ट॑माय॒चेषु॑मतेच॒नमो॑-ह्रस्वाय॑ ॥ २९ ॥

नमो॑ह्रस्वाय॑ चव्वाम॒नाय॑च॒नमो॑बृह॒तेच॒ व्वर्षी॑यसेच॒नमो॑व्वृद्धाय॑च-स॒वृधे॑च॒नमोग्र्य॑ायचप्प्रथ॒माय॑चनम॑ऽआ॒शवे ॥ ३० ॥

नम॑ऽ आ॒शवे॑चाजि॒राय॑च॒नम॒ ᳚ शीग्घ्र्य॑ायचशीभ्भ्या॑यच॒नम॒ऽऊर्म्म्या॑यचावस्वन्न्यायच॒नमो॑ नादे॒याय॑च॒द्वीप्प्या॑यच ॥ ३१ ॥

नमो॑ज्ज्ये॒ष्ठाय॑ च कनि॒ष्ठाय॑च॒नम॑ ᳚ पूर्व्व॒जाय॑चापर॒जाय॑च॒नमो॑मद्ध्यमाय॑चापग॒ल्भा य॑च॒नमो॑जघ॒न्न्या॒यचबु॒ध्न्या॒यच॒नम॒ ᳚ सो-भ्भ्या॑य ॥ ३२ ॥

नम॒ ᳚ सोभ्भ्य॑ायचप्प्रतिस॒र्य्यायच॒नम॒ोयाम्म्या॑यच॒क्षेम्म्या॑यच॒नम॒ ᳚ श्लोक्या॑यचावसा॒न्न्यायच॒नम॑ऽउर्व्व॒र्य्यायच॒खल्ल्या॑यच॒नम॒ोव्वन्न्या॑य ॥ ३३ ॥

नम॒ो व्वन्न्या॑य च॒कक्ष्या॑यच॒नम॑ ᳚ श्र॒वाय॑चप्प्रतिश्श्र॒वाय॑च॒नम॑ऽआ॒शु-षे॑णायच॒ाशुर॑थायच॒ नम॒ ᳚ शूराय॑चावभे॒दिने॑ च॒नमो॑ बि॒ल्मिने॑ ॥३४॥

नमो॑बि॒ल्मिने॑चकव॒चिने॑च॒नमो॑व्व॒र्म्मिणे॑चव्वरू॒थिने॑च॒नम॑ ᳚ श्श्रुताय॑चश्श्रुतसे॒नाय॑च॒नमो॑दुन्दु॒भ्भ्याय॑चाहन॒न्न्याय॑च॒नमो॑धृ॒ष्णवे॑ ॥ ३५ ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

नमो धृष्णवे चप्रमृशाय च नमो निषङ्गिणे चेषुधिमते च नमस्तीक्ष्णे-
षवे चायुधिने च नमः स्वायुधाय च सुधन्वने च ॥ ३६ ॥

नमः स्रुत्याय च पथ्याय च नमः काट्याय च नीप्याय च नमः कुल्याय
च सरस्याय च नमो नादेयाय च वैशन्ताय च नमः कूप्याय ॥ ३७ ॥

नमः कूप्याय चावट्याय च नमो वीध्र्याय चातप्याय च नमो मेघ्याय च
विद्युत्याय च नमो वर्ष्याय चावर्ष्याय च नमो वात्याय ॥ ३८ ॥

नमो वात्याय च रेष्म्याय च नमो वास्तव्याय च वास्तुपाय च नमः
सोमाय च रुद्राय च नमस्ताम्राय चारुणाय च नमः शङ्गवे ॥ ३९ ॥

नमः शङ्गवे च पशुपतये च नम उग्राय च भीमाय च नमोऽग्रेवधाय च
दूरेवधाय च नमो हन्त्रे च हनीयसे च नमो वृक्षेभ्यो हरिकेशेभ्यो नमः-
स्ताराय ॥४०॥

नमः शम्भवाय च मयोभवाय च नमः शङ्कराय च मयस्कराय च नमः
शिवाय च शिवतराय च ॥ ४१ ॥

नमः पार्याय चावार्याय च नमः प्रतरणाय चोत्तरणाय च नमस्ती-
र्थ्याय च कूल्याय च नमः शष्प्याय च फेन्याय च नमः सिकत्याय ॥४२॥

नमः सिकत्याय च प्रवाह्याय च नमः किंशिलाय च क्षयणाय च नमः
कपर्दिने च पुलस्तये च नम इरिण्याय च प्रपथ्याय च नमो व्रज्याय
॥ ४३ ॥

नमो व्रज्याय च गोष्ठ्याय च नमस्तल्प्याय च गेह्याय च नमो हृदय्याय
च निवेष्प्याय च नमः काट्याय च गह्वरेष्ठाय च नमः शुष्क्याय
॥४४॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

नमः शुष्क्यांय च हरित्यायच नमं पा ᳪ सव्यायचरजस्यायचनमो-
लोप्प्यांयचोलप्प्यायचनमऽऊर्व्व्यांयचसूर्व्व्यांय चनमं पुर्णायं ॥४५॥

नमं पुर्णायं चपर्णंशदायंचनमंऽउद्गु रमांणायचाभिग्घ्नते चनमंऽ-
आखिदतेचंप्रखिदतेचनमंऽइषु कृद्भ्यो धनुष्कृद्भ्यंश्चवोनमोनमों -
वर्ᳪकिरिकेब्भ्यो दे वाना ᳪ हृदंयेब्भ्योनमो व्विचिन्न्वत्केब्भ्योनमो-
व्विक्षिणत्केब्भ्योनमंऽआनिर्हतेब्भ्यं ॥ ४६ ॥

द्रापेऽअन्धंसतस्प्पते दरिंद्द्रनीललोहित ॥
आसाम्प्रजानंमेषाम्पंशूनाम्माभे र्म्मारोङ्मोचंनᳪकिञ्चनाममंमत् ॥४७॥

इमारुद्द्रायंतवसे कपर्द्दिने क्षयद्वीं रायप्प्रभरामहेमती ᳪ ॥
यथाशमसंद्द्विपदे चतुंष्प्पदे व्विश्श्वम्पुष्ट्टङ्ग्रामे ऽअस्मिन्नं-
नातुरम् ॥ ४८ ॥

यातेरुद्द्रशिवातनूः शिवाव्विश्श्वाहांभेषजी ॥
शिवारुद्द्रस्यंभेषजीतय ानोमृडजीवसें ॥ ४९ ॥

परिं नोरुद्द्रस्यंहे तिर्व्वृंणक्तुपरिंत्त्वे षस्यंदुर्म्मं तिरंघायोः ॥
अर्थस्त्थिरामघवंद्भ्यस्तनुष्व्वमीढ्वंस्तोकायतनंयायमृड ॥ ५० ॥

मीढुंष्टमशिवंतम । शिवोनं सुमना भव ॥
परमे व्वृक्षऽआयुं धन्निधायकृत्तिंव्वसानऽआचंरपिनांकम्बिभ्रदागंहि
॥ ५१ ॥

व्विकिंरिद्द्र व्विलोंहित । नमंस्तेऽअस्तुभगव ॥
यास्तें सहस्त्रᳪ हे तयोन्न्यमस्म्मन्निवंपन्तुता ᳪ ॥ ५२ ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

सहस्राणिसहस्रशोबाह्वोस्तवहेतयः ॥
तासामीशानोभगवःपराचीनामुखाकृधि ॥ ५३ ॥

असंख्यातासहस्राणि । येरुद्राऽअधिभूम्याम् ॥
तेषांसहस्रयोजनेवधन्वानितन्मसि ॥ ५४ ॥

अस्मिन्महत्यर्णवेन्तरिक्षे भवाऽअधि ।
तेषांसहस्रयोजनेवधन्वानितन्मसि ॥ ५५ ॥

नीलग्रीवाः शितिकण्ठादिवंरुद्राऽउपश्रिताः ॥
तेषांसहस्रयोजनेवधन्वानितन्मसि ॥ ५६ ॥

नीलग्रीवाःशितिकण्ठाःशर्वाअधःक्षमाचराः ॥
तेषांसहस्रयोजनेवधन्वानितन्मसि ॥ ५७ ॥

येवृक्षेषु । शष्पिञ्जरानीलग्रीवाविलोहिताः ॥
तेषांसहस्रयोजनेवधन्वानितन्मसि ॥ ५८ ॥

येभूतानामधिपतयोविशिखासःकपर्दिनः ॥
तेषांसहस्रयोजनेवधन्वानितन्मसि ॥ ५९ ॥

येपथाम्पथिरक्षयऽऐलबृदाऽआयुर्युधः ॥
तेषांसहस्रयोजनेवधन्वानितन्मसि ॥ ६० ॥

येतीर्थानि । प्रचरन्तिसृकाहस्तानिषङ्गिणः ॥
तेषांसहस्रयोजनेवधन्वानितन्मसि ॥ ६१ ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

येन्नेषु । व्विविद्ध्यन्तिपात्रेषुपिबंतोजनान् ॥
तेषांॐसहस्रयोजनेवधन्वानितन्मसि ॥ ६२ ॥

यऽएतावन्तश्श्चभूयांॐसश्श्चदिशोरुद्राव्वितस्थिरे ॥
तेषाॐसहस्रयोजनेवधन्वानितन्मसि ॥ ६३ ॥

नमोस्तु । रुद्रेभ्योयेदिविदेषांव्वर्षमिषवः ॥

तेभ्योदशप्राचीर्दशदक्षिणादशप्रतीचीर्दशोदीचीर्दशोर्ध्वाः ॥
तेभ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुते
यन्द्विष्मोयश्श्चनोद्द्वेष्टितमेषाञ्जम्भेदध्मः ॥ ६४ ॥

नमोस्तु । रुद्रेभ्योयेन्तारक्षेयेषांव्वातऽइषवः ॥

तेभ्योदशप्राचीर्दशदक्षिणादशप्रतीचीर्दशोदीचीर्दशोर्ध्वाः ॥
तेभ्योनमोऽअस्तु तेनोवन्तुतेनोमृडयन्तु तेयन्द्विष्मो-
यश्चनोद्द्वेष्टितमेषाञ्जम्भेदध्मः ॥ ६५ ॥

नमोस्तु रुद्रेभ्योयेपृथिव्यांयेषा मन्नमिषवः ॥
तेभ्योदशप्राचीर्दशदक्षिणादशप्रतीचीर्दशोदीचीर्दशोर्ध्वाः ॥
तेभ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्मो-
यश्श्चनोद्द्वेष्टितमेषाञ्जम्भेदध्मः ॥ ६६ ॥

इति रुद्रे पञ्चमोऽध्यायः ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# माण्डूक्योपनिषत्

ॐ भद्रं कर्णेभिः शृणुयाम देवाः। भद्रं पश्येमाक्षभिर्यजत्राः।
स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिः। व्यशेम देवहितं यदायुः॥

भद्रं नो अपि वातय मनः॥
ॐ शान्तिः शान्तिः शान्तिः॥

ओमित्येतदक्षरमिदꣳ सर्वं तस्योपव्याख्यानं भूतं भवद्भविष्यदिति सर्वमोङ्कार एव। यच्चान्यत्त्रिकालातीतं तदप्योङ्कार एव॥१॥

सर्वं ꣳ ह्येतद्ब्रह्मायमात्मा ब्रह्म सोऽयमात्मा चतुष्पात्॥२॥

जागरितस्थानो बहिष्प्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः स्थूलभुग्वैश्वानरः प्रथमः पादः॥३॥

स्वप्नस्थानोऽन्तःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः प्रविविक्तभुक्तैजसो द्वितीयः पादः॥४॥

यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति तत्सुषुप्तम्। सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवाऽऽनन्दमयो ह्यानन्दभुक्चेतोमुखः प्राज्ञस्तृतीयः पादः॥५॥

एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्याम्येष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानाम्॥६॥

नान्तःप्रज्ञं न बहिष्प्रज्ञं नोभयतःप्रज्ञं न प्रज्ञानघनं न प्रज्ञं नाप्रज्ञम्। अदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्म्यप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः॥७॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

सोऽयमात्माऽध्यक्षरमोङ्कारोऽधिमात्रं पादा मात्रा मात्राश्च पादाऽकार उकारो मकार इति ॥८॥

जागरितस्थानो वैश्वानरोऽकारः प्रथमा मात्राऽऽप्तेरादिमत्त्वाद्वाऽऽप्नोति ह वै सर्वान्कामानादिश्च भवति य एवं वेद ॥९॥

स्वप्नस्थानस्तैजस उकारो द्वितीया मात्रोत्कर्षादुभयत्वाद्वा, उत्कर्षति ह वै ज्ञानसन्तर्ति समानश्च भवति नास्याब्रह्मवित्कुले भवति य एवं वेद ॥१०॥

सुषुप्तस्थानः प्राज्ञो मकारस्तृतीया मात्रा मितेरपीतेर्वा ।
मिनोति ह वा इद ँ सर्वमपीतिश्च भवति य एवं वेद ॥११॥

अमात्रश्चतुर्थोऽव्यवहार्यः प्रपञ्चोपशमः शिवोऽद्वैत एवमोङ्कार आत्मैव संविशत्यात्मनाऽऽत्मानं य एवं वेद य एवं वेद ॥१२॥

इति माण्डूक्योपनिषत् ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# कैवल्योपनिषत्

ॐ सह नाववतु सह नौ भुनक्तु सह वीर्यं करवावहै।
तेजस्विनावधीतमस्तु मा विद्विषावहै ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

ॐ अथाश्वलायनो भगवन्तं परमेष्ठिनमुपसमेत्योवाच। अधीहि भगवन्ब्रह्मविद्यां वरिष्ठां सदा सद्भिः सेव्यमानां निगूढाम्। यथा चिरात् सर्वपापं व्यपोह्य परात्परं पुरुषं याति विद्वान् ॥१॥

तस्मै स होवाच पितामहश्च श्रद्धाभक्तिध्यानयोगादवैहि।
न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः ॥२॥

परेण नाकं निहितं गुहायां विभ्राजते यद्यतयो विशन्ति।
वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः ॥३॥

ते ब्रह्मलोकेषु परान्तकाले परामृताः परिमुच्यन्ति सर्वे।
विविक्तदेशे च सुखासनस्थः शुचिः समग्रीवशिरः शरीरः ॥४॥

अत्याश्रमस्थः सकलेन्द्रियाणि निरुध्य भक्त्या स्वगुरुं प्रणम्य।
हृत्पुण्डरीकं विरजं विशुद्धं विचिन्त्य मध्ये विशदं विशोकम् ॥५॥

अचिन्त्यमव्यक्तमनन्तरूपं शिवं प्रशान्तममृतं ब्रह्मयोनिम्।
तमादिमध्यान्तविहीनमेकं विभुं चिदानन्दरूपमद्भुतम् ॥६॥

उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम्।
ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात् ॥७॥

स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट्।
स एव विष्णुः स प्राणः स कालोऽग्निः स चन्द्रमा ॥८॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

स एव सर्वं यद्भूतं यच्च भव्यं सनातनम् ।
ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तये ॥९॥

सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
संपश्यन् ब्रह्म परमं याति नान्येन हेतुना ॥१०॥

आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम् ।
ज्ञाननिर्मथनाभ्यासात् पापं दहति पण्डितः ॥११॥

स एव मायापरिमोहितात्मा शरीरमास्थाय करोति सर्वम् ।
स्त्रियन्नपानादिविचित्रभोगैः स एव जाग्रत् परितृप्तिमेति ॥१२॥

स्वप्ने स जीवः सुखदुःखभोक्ता स्वमायया कल्पित जीवलोके ।
सुषुप्तिकाले सकले विलीने तमोऽभिभूतः सुखरूपमेति ॥१३॥

पुनश्च जन्मान्तरकर्मयोगात् स एव जीवः स्वपिति प्रबुद्धः ।
पुरत्रये क्रीडति यश्च जीवस्ततः सुजातं सकलं विचित्रम् ॥१४॥

आधारमानन्दमखण्डबोधं यस्मिन् लयं याति पुरत्रयं च ॥
एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापश्च पृथ्वी विश्वस्य धारिणी ॥१५॥

यत्परं ब्रह्म सर्वात्मा विश्वस्यायतनं महत् ।
सूक्ष्मात्सूक्ष्मतरं नित्यं सत्त्वमेव त्वमेव तत् ॥१६॥

जाग्रत्स्वप्नसुषुप्त्यादिप्रपञ्चं यत्प्रकाशते ।
तद् ब्रह्माहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते ॥१७॥

त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यद्भवेत् ।
तेभ्यो विलक्षणः साक्षी चिन्मात्रोऽहं सदाशिवः ॥१८॥

मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् ।
मयि सर्वं लयं याति तद् ब्रह्माद्वयमस्म्यहम् ॥

॥ इति प्रथमः खण्डः ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अणोरणीयानहमेव तद्वन्महानहं विश्वमहं विचित्रम् ।
पुरातनोऽहं पुरुषोऽहमीशो हिरण्मयोऽहं शिवरूपमस्मि ॥१॥

अपाणिपादोऽहमचिन्त्यशक्तिः पश्याम्यचक्षुः स शृणोम्यकर्णः ।
अहं विजानामि विविक्तरूपो न चास्ति वेत्ता मम चित्सदाहम् ॥२॥

वेदैरनेकैरहमेव वेद्यो वेदान्तकृद् वेदविदेवचाहम् ।
न पुण्यपापे मम नास्ति नाशो न जन्मदेहेन्द्रियबुद्धिरस्ति ॥३॥

न भूमिरापो न च वह्निरस्ति न चानिलो मेऽस्ति न चाम्बरं च ।
एवं विदित्वा परमात्मरूपं गुहाशयं निष्कलमद्वितीयम् ॥४॥

समस्तसाक्षि सदसद्विहीनं प्रयाति शुद्धं परमात्मरूपम् । यः शतरुद्रीयमधीते सोऽग्निपूतो भवति, स वायुपूतो भवति, स आत्मपूतो भवति, स सुरापानात्पूतो भवति, स ब्रह्महत्यायाः पूतो भवति, स सुवर्णस्तेयात् पूतो भवति, स कृत्याकृत्यात् पूतो भवति । तस्मादविमुक्तमाश्रितो भवत्यत्याश्रमी सर्वदा सकृद्वा जपेत् । अनेन ज्ञानमाप्नोति संसारार्णवनाशनम् । तस्मादेवं विदित्वैनं कैवल्यं पदमश्नुते कैवल्यं पदमश्नुत इति ॥५॥ इति द्वितीयः खण्डः ॥

॥ इति कैवल्योपनिषत् ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

# शिवाथर्वशीर्षम् ।

श्रीगणेशाय नमः ॥ शिवउपनिषदि ॐ देवा ह वै स्वर्गलोकमयंस्ते रुद्रमपृच्छन् । को भवानिति । सोऽब्रवीदहमेकः प्रथममासोद्वर्तामि च भविष्यामि च नान्यः कश्चिन्मत्तो व्यतिरिक्त इति । सोऽन्तरादन्तरं प्राविशद्दिशश्चान्तरं प्राविशत्सोऽहं नित्यानित्यो व्यक्ताव्यक्तो ब्रह्माब्रह्माहं प्राञ्चः प्रत्यञ्चोऽहं दक्षिणाञ्च उदञ्चोहमधश्चोर्ध्वश्चाहं दिशश्चाप्रतिदिशधाहं पुमान् स्त्रियश्च हंसाविञ्यहं गायत्र्यहं त्रिष्टुब्जगत्यनुष्टुम्नाहं छंदोऽहं सत्योऽहं गार्हपत्योदक्षिणाग्निराहवनीयोऽहं गोरहं गौर्यमृगहं यजुरहं सामाहमथर्वाङ्गिरसोऽहं ज्येष्ठोऽहं श्रेष्ठोऽहं वरिष्ठोहऽमापोहं तेजोऽहं गुह्योऽहमरण्योऽहमक्षरमहं क्षरमहं पुष्करमहं पवित्रमहमुग्रश्च बलिश्च पुरस्ताज्ज्योतिरित्यहमेव सर्वेभ्यो मामेव स सर्वः समायो मां वेद स देवान् वेद सर्वांश्च वेदान् साङ्गानपि ब्रह्मब्रह्माणैश्च गांगोभिर्ब्राह्मणेन हविर्हविषा आयुरायुषा सत्यं सत्येन धर्मेण धर्मं तर्पयामि स्वेन तेजसा । ततो ह वै ते देवा रुद्रमपृच्छन् । ते देवा रुद्रमपश्यन् ते देवा रुद्रमध्यायन् ते देवा-ऊर्ध्वबाहवो रुद्रं स्तुवन्ति ॐ यो वै रुद्रः स भगवान् यश्च ब्रह्मा तस्मै वै नमो नमः ॥१॥ यो वै रुद्रः स भगवान् यश्चविष्णुस्तस्मै वै नमो नमः ॥२॥ यो वै रुद्रः स भगवान् यश्च स्कंदस्तस्मै० ॥३॥ यो वै रुद्रः सभगवान् यश्चेन्द्रस्तस्मै० ॥४॥ यो वै रुद्रः स भगवान्यश्चाग्निस्तस्मै० ॥५॥ यो वै रुद्रः स भगवान् यश्च वायुस्त० ॥६॥ ॐ यो वै रुद्रः स भगवान् यश्चसूर्यस्तस्मै० ॥७॥ यो वै रुद्रः सभगवान् यश्च सोमस्तस्मै० ॥८॥ यो वै रुद्रः स भगवान् येऽष्टौ ग्रहास्तस्मै० ॥९॥ यो वै रुद्रः स भगवान् ये चाष्टौ प्रतिग्रहास्तस्मै० ॥१०॥ यो वै रुद्रः स भगवान् यच्चभूस्तस्मै० ॥११॥ यो वै रुद्रः स भगवान् यच्च-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

भुवस्तस्मै० ॥१२॥ यो वै रुद्रः स भगवान् यच्चस्वस्तस्मै० ॥१३॥ यो वै रुद्रः स भगवान् यच्चमहस्तस्मै० ॥१४॥ यो वै रुद्रः स भगवान्- या च पृथिवी तस्मै० ॥१५॥ यो वै रुद्रः स भगवान् यच्चान्तरिक्षं तस्मै० ॥१६॥ यो वै रुद्रः स भगवान् या च द्यौस्तस्मै० ॥१७॥ यो वै रुद्रः स भगवान् यश्चापस्तस्मै० ॥१८॥ यो वै रुद्रः स भगवान् यच्च तेजस्तस्मै० ॥१९॥ यो वै रुद्रः स भगवान् यश्च कालस्तस्मै० ॥२०॥ यो वै रुद्रः स भगवान् यश्च यमस्तस्मै० ॥२१॥ यो वै रुद्रः स भगवान् यश्चमृत्युस्तस्मै० ॥२२॥ यो वै रुद्रः स भगवान् यच्चामृतं तस्मै० ॥२३॥ यो वै रुद्रः स भगवान् यच्चाकाशं तस्मै० ॥२४॥ यो वै रुद्रः सभगवान् यच्च विश्वं तस्मै० ॥२५॥ यो वै रुद्रः स भगवान् यच्च स्थूलं तस्मै० ॥२६॥ यो वै रुद्रः स भगवान् यच्च सूक्ष्मं तस्मै० ॥२७॥ यो वै रुद्रः स भगवान् यच्च शुक्लं तस्मै० ॥२८॥ यो वै रुद्रः स भगवान् यच्च कृष्णस्तस्मै० ॥२९॥ यो वै रुद्रः स भगवान् यच्चकृत्स्नं० ॥३०॥ यो वै रुद्रः स भगवान् यच्च सत्यं तस्मै० ॥३१॥ यो वै रुद्रः सभगवान् यच्च सर्वं तस्मै० ॥३२॥ भूस्ते आदिर्मध्यंभुवस्तेस्वस्तेशीर्षं विश्वरूपोऽसि ब्रह्मै कस्त्वं द्विधात्रिधावृद्धिस्त्वं शांतिस्त्वं पुष्टिस्त्वं हुतमहुतं दत्तमदत्तं सर्वमसर्वं विश्वमविश्वं कृतमकृतं परमपरं परायणञ्च त्वं अपामसोममृता अंभूमागन्मे ज्योतिरविदाम देवान् । किं नूनमस्मान् कृणवदरातिः । किमुधूर्तिरमृतं मर्त्यस्य सोमसूर्यपुरस्तात्सूक्ष्मः पुरुषः । सर्वञ्जगद्धितं वा एतदक्षरं प्राजा- पत्यं सौम्यं सूक्ष्मं पुरुषं ग्राह्यमग्राह्येण भावं भावेन सौम्यं सौम्येन सूक्ष्मं सूक्ष्मेण वायव्यं वायव्येन ग्रसति तस्मै महाग्रासाय वै नमो नमः। हृदिस्था देवताः सर्वा हृदि प्राणाः प्रतिष्ठिताः । हृदि त्वमसि यो नित्यं तिस्रो मात्राः परस्तुसः । तस्योत्तरतः शिरोदक्षिणतः पादौ य उत्तरतः स ओङ्कारः य ओङ्कारः स प्रणवः यः प्रणवः स सर्वव्यापी यः सर्वव्यापी सोऽनन्तः योऽनन्तस्तत्तारं यत्तारं तच्छुक्लं यच्छुक्लं यत्सूक्ष्मं तद्वैद्युतं तत्परं ब्रह्म । यत् परं ब्रह्म

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

स एकः य एकः स रुद्रः यो रुद्रः स ईशानः य ईशानः स भगवान् महेश्वरः ॥३॥ अथ कस्मादुच्यते ओङ्कारः यस्मादुच्चार्यमाण एव प्राणानूर्ध्वमुत्क्रामयति तस्मादुच्यते ओङ्कारः। अथ कस्मादुच्यते प्रणवः। यस्मादुच्चार्यमाण एव ऋग्यजुः सामाथर्वाङ्गिरस ब्रह्म-ब्राह्मणेभ्यः प्रणामयति नामयति च तस्मादुच्यते प्रणवः। अथ कस्मादुच्यते सर्वव्यापी यस्मादुच्चार्यमाण एव यथास्नेहेन पलालपिण्डमिव शान्तरूपमोतप्रोतमनुप्राप्तोव्यतिषक्तश्च तस्मादुच्यते सर्वव्यापी। अथ कस्मादुच्यतेऽनन्तः यस्मादुच्चार्यमाण एव तिर्यगूर्ध्वमधस्ताच्चास्यान्तो नोपलभ्यते तस्मादुच्यतेऽनन्तः। अथ कस्मादुच्यते तारं यस्मादुच्चार्यमाण एव गर्भजन्मव्याधिजरामरणसंसार महाभयात्तारयति त्रायते च तस्मादुच्यते तारम्। अथ कस्मादुच्यते शुक्लं यस्मादुच्चार्यमाण एव क्रंदते विलमोयति च तस्मादुच्यते शुक्लम्। अथ कस्मादुच्यते सूक्ष्मं यस्मादुच्चार्यमाण एव सूक्ष्मो भूत्वा शरीराण्यधितिष्ठति सर्वाणि चाङ्गान्यभिमृश्यति तस्मादुच्यते सूक्ष्मम्। अथकस्मादुच्यते वैद्युतं यस्मादुच्चार्यमाण एव व्यक्ते महति तपसि द्योतयति तस्मादुच्यते वैद्युतम्। अथ कस्मादुच्यते परं ब्रह्म यस्मात्परमपरं परायणञ्च बृहद्‌बृहत्या बृंहयति तस्मादुच्यते परं ब्रह्म। अथ कस्मादुच्यते एकः यः सर्वान्प्राणान् संभक्ष्य संभक्षणेनाजः संसृजति विसृजति तीर्थमेके व्रजन्ति तीर्थमेके दक्षिणः प्रत्यञ्च उदञ्च प्राच्योऽभिव्रजन्त्येके तेषां सर्वेषामिह सङ्गतिः साकं स एकोऽभूदन्तश्चरति प्रजानां तस्मादुच्यते एकः। अथ कस्मादुच्यते रुद्रः यस्मादृषिभिर्नान्यैर्भक्तैर्द्रुतमस्यरूपमुपलभ्यते तस्मादुच्यते रुद्रः। अथ कस्मादुच्यते ईशानः यः सर्वान्देवानीशते ईशानीभिर्जननीभिश्च शक्तिभिः। अभित्वा शूरणोनुमोदुग्धा इव धेनवः। ईशानमस्य जगतः स्वदर्शमीशानमिन्द्र तस्थुष इति तस्मादुच्यते ईशानः। अथ कस्मादुच्यते



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

भगवान् महेश्वरः यस्माद्भक्तान् ज्ञानेन भजत्यनुगृह्णाति च वाचं संसृजति च सर्वान् भावान् परित्यज्यात्मज्ञानेन योगैश्वर्येण महति महीयते तस्मादुच्यते स भगवान् महेश्वरः तदेतद्रुद्रचरितम् ॥४॥ एषो ह देवः प्रदिशोऽनुसर्वाः पूर्वो ह जातः स उ गर्भे अन्तः। स एव जातः स जनिष्यमाणः प्रत्यङ् जनांस्तिष्ठति सर्वतोमुखः। एको रुद्रो न द्वितीयाय तस्मै य इमाँल्लोकानीशत ईशानीभिः। प्रत्यङ् जनास्तिष्ठति चान्तकाले संसृज्य विश्वाभुवनानि गोप्ता ॥ यो योनिं योनिमधितिष्ठत्येको येनेदं सर्वं विचरति सर्वम्। तमीशानं वरदं देवमीड्यं निचाय्येमां शान्तिमत्यन्तमेति। क्षमां हित्वा हेतुजालस्य मूलं बुद्धया संचितं स्थापयित्वा तु रुद्रे। रुद्रमेकत्वमाहुः शाश्वतं वै पुराणमिषमूर्जेण पशवो नानुमायन्तम्मृत्युपाशान्। तदेतेनात्मन्नेतेनार्धचतुर्थेन मात्रेण शान्ति संसृजति। पशुपाशविमोक्षणं या सा प्रथमा मात्रा ब्रह्मदेवत्या रक्ता वर्णेन यस्तां ध्यायते नित्यं सगच्छेत् ब्रह्मपदम्। या सा द्वितीया मात्रा विष्णुदेवत्या कृष्णावर्णेन यस्तां ध्यायते नित्यं सगच्छेद्वैष्णवं पदम्। या सा तृतीया मात्रा ईशानदेवत्या कपिला वर्णेन यस्तां ध्यायते नित्यं सगच्छेदीशानं पदम्। या सार्धचतुर्थी मात्रा सर्वदेवत्याऽव्यक्तीभूता खं विचरति शुद्धा स्फटिकसन्निभा वर्णनयस्तां ध्यायते नित्यं सगच्छेत्पदमनामयम्। तदेतदुपासीत मुनयो वाग्वदन्ति न तस्य ग्रहणमयं पंथाविहित उत्तरेण येन देवा यान्ति येन पितरो येन ऋषयः परमपरं परायणं चेति। बालाग्रमात्रं हृदयस्य मध्ये विश्वेदेव जातरूपं वरेण्यम्। तमात्मस्थं ये तु पश्यन्ति धीरास्तेषां शान्तिर्भवति नोत्तरेषाम्। यस्मिन् क्रोधं याञ्च तृष्णां क्षमाञ्चाक्षमां हित्वा हेतुजालस्य मूलं बुद्धया सञ्चितं स्थापयित्वा तु रुद्रे रुद्रमेकत्वमाहुः रुद्रो हि शाश्वतेन वै पुराणेनेषमूर्जेण तपसा नियन्ताग्निरिति भस्म वायुरितिभस्मजलमिति भस्म सर्वं ह वा इदं भस्म मन एतानि

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

चक्षूंषि यस्मादव्रतमिदं पाशुपतं यद्भस्मनाङ्गानि संस्पृशेत् तस्माद्ब्रह्म तदेतत्पाशुपतं पशुपाशविमोक्षणाय ॥५॥ योऽग्नौ रुद्रो योऽप्स्वन्तर्य ओषधीर्वीरुधश्र्याविवेशा य इमा विश्वा भुवनानि चक्लृपेतस्मैरुद्राय नमोऽस्त्वग्नये। यो रुद्रोऽप्सुयोरुद्रोऽग्नौ यो रुद्रोऽश्वन्तर्यो रुद्र ओषधीर्विरुधआविवेश यो रुद्र इमाविश्वाभुवनानि च क्लृपे तस्मै रुद्राय वै नमोनमः। यो रुद्रोऽप्सु यो रुद्रो ओषधीषु यो रुद्रो वनस्पतिषु येन रुद्रेण जगदूर्ध्वं धारितं पृथिवी द्विधा त्रिधा धर्त्ता धारिता नागा येऽन्तरिक्षे तस्मै रुद्राय वै नमः। मूर्धानमस्य संसेव्याप्यथर्वा हृदयञ्च यत् ॥ मस्तिष्कादूर्ध्वं प्रेरयत्यवमानोऽधिशीर्षतः। तद्वा अथर्वणः शिरो देवकोशः समुज्झितः तत् प्राणोऽभिरक्षति शिरोऽन्तमथो मनः। नच दिवो देवजने गुप्ता नचान्तरिक्षाणि नच भूम इमाः। यस्मिन्निदं सर्वमोतप्रोतं तस्मादन्यन्नपरं किञ्चनास्ति। न तस्मात्पूर्वं न परं तदस्ति न भूतं नोत भव्यं यदासीत्। सहस्रपादेक मूर्ध्ना व्याप्तं स एवेदमावरीवर्तिभूतम्। अक्षरात् सञ्जायते कालः कालाद्व्यापक उच्यते। व्यापको हि भगवान् रुद्रो भोगायमानो यदाशेते रुद्रस्तदा संहार्यते प्रजाः उच्छ्वसिते तमो भवति तमस आपोऽश्वङ्गुल्यामथिते मथितं शिशिरे शिशिरं मथ्यमानं फेनं भवति फेनादण्डं भवत्यण्डाद् ब्रह्मा भवति ब्रह्मणो वायुः वायोरोङ्कार ओंङ्कारात्सावित्री सावित्र्या गायत्री गायत्र्या लोका भवन्ति अर्चयति तपः सत्यं मधुरक्षन्ति यद् ध्रुवम्। एतद्धि परमं तपः आपोज्योतीरसोमृतं ब्रह्म भूर्भुवः स्वरोन्नम इति ॥६॥ य इदमथर्वशिरो ब्राह्मणोऽधीते। अश्रोत्रियः श्रोत्रियो भवति। अनुपनीत उपनीतो भवति। सोऽग्निपूतो भवति। स वायुपूतो भवति। स सूर्यपूतो भवति। स सोमपूतो भवति। स सत्यपूतो भवति। स सर्वैर्देवैर्ज्ञातो भवति। स सर्वैर्वेदैरनुध्यातो भवति। स सर्वेषु तीर्थेषु स्नातो भवति।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तेन सर्वैः क्रतुभिरिष्टं भवति। गायत्र्याः षष्टिसहस्राणि जप्तानि भवन्ति। प्रणवानामयुतं जप्तं भवति। स चक्षुषः पंक्ति पुनाति आसप्तमात् पुरुषयुगान्पुनातीत्याह भगवानथर्वशिरः सकृज्ज-प्त्वैव शुचिः स पूतः कर्मण्यो भवति। द्वितीयं जप्त्वा गणाधि-पत्यमाप्नोति। तृतीयं जप्त्वैवमेवानुप्रविशन्त्यों सत्यमों सत्यमों सत्यम्।

॥ इत्यथर्ववेदे शिवाथर्वशीर्षम् ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

# उपदेशसाहस्री

## (पद्यप्रबन्धः)

### उपोद्घातप्रकरणम् ॥ १ ॥

चैतन्यं सर्वगं सर्वं सर्वभूतगुहाशयम् ।
यत्सर्वविषयातीतं तस्मै सर्वविदे नमः ॥१॥

समापय्य क्रियाः सर्वा दाराग्न्याधानपूर्विकाः ।
ब्रह्मविद्यामथेदानीं वक्तुं वेदः प्रचक्रमे ॥२॥

कर्माणि देहयोगार्थं देहयोगे प्रियाप्रिये ।
ध्रुवे स्यातां ततो रागो द्वेषश्चैव ततः क्रियाः ॥३॥

धर्माधर्मौ ततोऽज्ञस्य देहयोगस्तथा पुनः ।
एवं नित्यप्रवृत्तोऽयं संसारश्चक्रवद्भृशम् ॥४॥

अज्ञानं तस्य मूलं स्यादिति तद्धानमिष्यते ।
ब्रह्मविद्याऽत आरब्धा ततो निःश्रेयसं भवेत् ॥५॥

विद्यैवाज्ञानहानाय न कर्माप्रतिकूलतः ।
नाज्ञानस्याप्रहाणे हि रागद्वेषक्षयो भवेत् ॥६॥

रागद्वेषक्षयाभावे कर्म दोषोद्भवं ध्रुवम् ।
तस्मान्निःश्रेयसार्थाय विद्यैवात्र विधीयते ॥७॥

ननु कर्म तथा नित्यं कर्तव्यं जीवने सति ।
विद्यायाः सहकारित्वं मोक्षं प्रति हि तद्व्रजेत् ॥८॥

यथा विद्या तथा कर्म चोदितत्वाविशेषतः ।
प्रत्यवायस्मृतेश्चैव कार्यं कर्म मुमुक्षुभिः ॥९॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

ननु ध्रुवफला विद्या नान्यत् किंचिदपेक्षते ।
नाग्निष्टोमो यथैवान्यद्ध्रुवकार्योऽप्यपेक्षते ॥१०॥

तथा ध्रुवफला विद्या कर्म नित्यमपेक्षते ।
इत्येवं केचिदिच्छन्ति न कर्म प्रतिकूलतः ॥११॥

विद्यायाः प्रतिकूलं हि कर्म स्यात्साभिमानतः ।
निर्विकारात्मबुद्धिश्च विद्येतीह प्रकीर्तिता ॥१२॥

अहं कर्ता ममेदं स्यादिति कर्म प्रवर्तते ।
वस्त्वधीना भवेद्विद्या कर्त्रधीनो भवेद्विधिः ॥१३॥

कारकाण्युपमृद्नाति विद्या बुद्धिमिवोषरे ।
इति तत्सत्यमादाय कर्म कर्तुं व्यवस्यति ॥१४॥

विरुद्धत्वादतः शक्यं कर्म कर्तुं न विद्यया ।
सहैव विदुषा तस्मात्कर्म हेयं मुमुक्षुणा ॥१५॥

देहाद्यैरविशेषेण देहिनो ग्रहणं निजम् ।
प्राणिनां तदविद्योत्थं तावत्कर्मविधिर्भवेत् ॥१६॥

नेति नेतीति देहादीनपोह्यात्माऽवशेषितः ।
अविशेषात्मबोधार्थं तेनाऽविद्या निवर्तिता ॥१७॥

निवृत्ता सा कथं भूयः प्रसूयेत प्रमाणतः ।
असत्येवाविशेषेऽपि प्रत्यगात्मनि केवले ॥१८॥

न चेद्भूयः प्रसूयेत कर्ता भोक्तेति धीः कथम् ।
सदस्मीति च विज्ञाने तस्माद्विद्याऽसहायिका ॥१९॥

अत्यरेचयदित्युक्तो न्यासः श्रुत्याऽत एव हि ।
कर्मभ्यो मानसान्तेभ्य एतावदिति वाजिनाम् ॥२०॥

अमृतत्वं श्रुतं यस्मात्त्याज्यं कर्म मुमुक्षुभिः ।
अग्निष्टोमवदित्युक्तं तत्रेदमभिधीयते ॥२१॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

नैककारकसाध्यत्वात्फलान्यत्वाच्च कर्मणः ।
विद्या तद्विपरीताऽतो दृष्टान्तो विषमो भवेत् ॥२२॥

कृष्यादिवत्फलार्थत्वादन्यकर्मोपबृंहणम् ।
अग्निष्टोमस्त्वपेक्षेत विद्यान्यत्किमपेक्षते ॥२३॥

प्रत्यवायस्तु तस्यैव यस्याहङ्कार इष्यते ।
अहङ्कारफलार्थित्वे विद्येते नात्मवेदिनः ॥२४॥

तस्मादज्ञानहानाय संसारविनिवृत्तये ।
ब्रह्मविद्याविधानाय प्रारब्धोपनिषत्त्वियम् ॥२५॥

सदेरुपनिपूर्वस्य क्विपि चोपनिषद्भवेत् ।
मन्दीकरणभावाच्च गर्भादेः शातनात्तथा ॥२६॥

## प्रतिषेधप्रकरणम् ॥ २ ॥

प्रतिषेद्धुमशक्यत्वान्नेति नेतीति शेषितम् ।
इदं नाहमिदं नाहमित्यद्धा प्रतिपद्यते ॥१॥

अहंधीरिदमात्मोत्था वाचारम्भणगोचरा ।
निषिद्धात्मोद्भवत्वात्सा न पुनर्मानतां व्रजेत् ॥२॥

पूर्वंबुद्धिमबाधित्वा नोत्तरा जायते मतिः ।
दृशिरेकः स्वयं सिद्धः फलत्वात्स न बाध्यते ॥३॥

इदं वनमतिक्रम्य शोकमोहादिदूषितम् ।
वनाद्गान्धारको यद्वत्स्वात्मानं प्रतिपद्यते ॥४॥

## ईश्वरात्मप्रकरणम् ॥ ३ ॥

ईश्वरश्चेदनात्मा स्यान्नासावस्मीति धारयेत् ।
आत्मा चेदीश्वरोऽस्मीति विद्या साऽन्यनिवर्तिका ॥१॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

आत्मनोऽन्यस्य चेद्धर्मा अस्थूलत्वादयो मताः ।
अज्ञेयत्वेऽस्य किं तैः स्यादात्मत्वे त्वन्यधीह्नुतिः ॥२॥

मिथ्याध्यासनिषेधार्थं ततोऽस्थूलादि गृह्यताम् ।
परत्र चेन्निषेधार्थं शून्यतावर्णनं हि तत् ॥३॥

बुभुत्सोर्यदि चान्यत्र प्रत्यगात्मन इष्यते ।
अप्राणो ह्यमनाः शुभ्र इति चानर्थकं वचः ॥४॥

## तत्त्वज्ञानस्वभावप्रकरणम् ॥ ४ ॥

अहंप्रत्ययबीजं यदहंप्रत्ययवत्स्थितम् ।
नाहंप्रत्ययवल्लुप्टं कथं कर्म प्ररोहति ॥१॥

दृष्टवच्चेत्प्ररोहः स्यान्नान्यकर्मा स इष्यते ।
तन्निरोधे कथं तत्स्यात्पृच्छामो वस्तदुच्यताम् ॥२॥

देहाद्यारम्भसामर्थ्याज्ज्ञानं सद्विषयं त्वयि ।
अभिभूय फलं कुर्यात्कर्मान्ते ज्ञानमुद्भवेत् ॥३॥

आरब्धस्य फले ह्येते भोगो ज्ञानं च कर्मणः ।
अविरोधस्तयोर्युक्तो वैधर्म्यं चेतरस्य तु ॥४॥

देहात्मज्ञानवज्ज्ञानं देहात्मज्ञानबाधकम् ।
आत्मन्येव भवेद्यस्य स नेच्छन्नपि मुच्यते ।
ततः सर्वमिदं सिद्धं प्रयोगोऽस्माभिरीरितः ॥५॥

## बुद्ध्यपराधप्रकरणम् ॥ ५ ॥

मूत्राशङ्को यथोदङ्को नाग्रहीदमृतं यथा ।
कर्मनाशभयाज्जन्तोरात्मज्ञानाग्रहस्तथा ॥१॥

बुद्धिस्थश्चलतीवात्मा ध्यायतीव च दृश्यते ।
नौगतस्य यथा वृक्षास्तद्वत्संसारविभ्रमः ॥२॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

नौस्थस्य प्रातिलोम्येन नगानां गमनं यथा।
आत्मनः संसृतिस्तद्वद्ध्यायतीवेति हि श्रुतिः ॥३॥

चैतन्यप्रतिबिम्बेन व्याप्तो बोधो हि जायते।
बुद्धेः शब्दादिभिर्भासस्तेन मोमुह्यते जगत् ॥४॥

चैतन्यभास्यताहमस्तादर्थ्यं च तदस्य यत्।
इदमंशप्रहाणे न परः सोऽनुभवो भवेत् ॥५॥

## विशेषापोहप्रकरणम् ॥ ६ ॥

छित्त्वा त्यक्तेन हस्तेन स्वयं नात्मा विशेष्यते।
तथा शिष्टेन सर्वेण येन येन विशेष्यते ॥१॥

तस्मात्त्यक्तेन हस्तेन तुल्यं सर्वं विशेषणम्।
अनात्मत्वेन तस्माज्ज्ञो मुक्तः सर्वैर्विशेषणैः ॥२॥

विशेषणमिदं सर्वं साध्वलङ्करणं यथा।
अविद्याध्यस्तमतः सर्वं ज्ञात आत्मन्यसद्भवेत् ॥३॥

ज्ञातैवात्मा सदा ग्राह्यो ज्ञेयमुत्सृज्य केवलः।
अहमित्यपि यद्ग्राह्यं व्यपेताङ्गसमं हि तत् ॥४॥

यावान्स्यादिदमंशो यः स स्वतोऽन्यो विशेषणम्।
विशेषप्रक्षयो यत्र सिद्धो ज्ञश्चित्रगुर्यथा ॥५॥

इदमंशोऽहमित्यत्र त्याज्यो नात्मेति पण्डितैः।
अहं ब्रह्मेति शिष्टांशो भूतपूर्वगतेर्भवेत् ॥६॥

## बुद्ध्यारूढप्रकरणम् ॥ ७ ॥

बुद्ध्यारूढं सदा सर्वं दृश्यते यत्र तत्र वा।
मया तस्मात्परं ब्रह्म सर्वज्ञश्चास्मि सर्वगः ॥१॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

यथात्मबुद्धिचाराणां साक्षी तद्वत्परेष्वपि ।
नैवापोढुं न वाऽऽदातुं शक्यस्तस्मात्परो ह्यहम् ॥२॥

विकारित्वमशुद्धत्वं भौतिकत्वं न चात्मनः ।
अशेषबुद्धिसाक्षित्वाद्बुद्धिवन्नाल्पवेदना ॥३॥

मणौ प्रकाश्यते यद्वद्रक्ताद्याकारताऽऽतपे ।
मयि संदृश्यते सर्वमातपेनेव तन्मया ॥४॥

बुद्धौ दृश्यं भवेद्बुद्धौ सत्यां नास्ति विपर्यये ।
द्रष्टा यस्मात्सदा द्रष्टा तस्माद्द्वैतं न विद्यते ॥५॥

अविवेकात् पराभावं यथा बुद्धिरवैत्तथा ।
विवेकात्तु परादन्यः स्वयं चापि न विद्यते ॥६॥

## मतिविलापनप्रकरणम् ॥ ८ ॥

चितिः स्वरूपं स्वत एव मे मते रसादियोगस्तव मोहकारितः ।
अतो न किञ्चित्तव चेष्टितेन मे फलं भवेत्सर्वविशेषहानतः ॥१॥

विमुच्य मायामयकार्यतामिह प्रशान्तिमायाह्यसदीहितात्सदा ।
अहं परं ब्रह्म सदा विमुक्तवत्तथाऽजमेकं द्वयवर्जितं यतः ॥२॥

सदा च भूतेषु समोऽस्मि केवलो यथा च खं सर्वगमक्षरं शिवम् ।
निरन्तरं निष्कलमक्रियं परं ततो न मेऽस्तीह फलं तवेहितैः ॥३॥

अहं ममैको न मदन्यदिष्यते तथा न कस्याप्यहमस्म्यसङ्गतः ।
असङ्गरूपोऽहमतो न मे त्वया कृतेन कार्यं तव चाद्वयत्वतः ॥४॥

फले च हेतौ च जनो विषक्तवान् इति प्रचिन्त्याहमतो विमोक्षणे ।
जनस्य संवादमिमं प्रक्लृप्तवान् स्वरूपतत्त्वार्थविबोधकारणम् ॥५॥

संवादमेतं यदि चिन्तयेन्नरो विमुच्यतेऽज्ञानमहाभयागमात् ।
विमुक्तकामश्च तथा जनः सदा चरत्यशोकः सम आत्मवित्सुखी ॥६॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

## सूक्ष्मताव्यापिताप्रकरणम् ॥ ९ ॥

सूक्ष्मताव्यापिते ज्ञेये गन्धादेरुत्तरोत्तरम् ।
प्रत्यगात्मावसानेषु पूर्वंपूर्वंप्रहाणतः ॥१॥

शारीरा पृथिवी तावद्यावद्ग्राह्या प्रमाणतः ।
अम्ब्वादीनि च तत्त्वानि तावज्ज्ञेयानि कृत्स्नशः ॥२॥

वाय्वादीनां यथोत्पत्तेः पूर्वं खं सर्वगं तथा ।
अहमेकः सदा शुद्धश्चिन्मात्रः सर्वगोऽद्वयः ॥३॥

ब्रह्माद्याः स्थावरान्ता ये प्राणिनो मम पूः स्मृताः ।
कामक्रोधादयो दोषा जायेरन्मे कुतोऽन्यतः ॥४॥

भूतदोषैः सदाऽस्पृष्टं सर्वभूतस्थमीश्वरम् ।
नीलं व्योम यथा बालो दुष्टं मां वीक्षते जनः ॥५॥

मच्चैतन्यावभास्यत्वात्सर्वप्राणिधियां सदा ।
पूर्मम प्राणिनः सर्वे सर्वज्ञस्य विपाप्मनः ॥६॥

जनिमज्ज्ञानविज्ञेयं स्वप्नज्ञानवदिष्यते ।
नित्यं निर्विषयं ज्ञानं तस्माद्द्वैतं न विद्यते ॥७॥

ज्ञातुर्ज्ञातिर्हि नित्योक्ता सुषुप्ते त्वन्यशून्यतः ।
जाग्रज्ज्ञातिस्त्वविद्यातस्तद्ग्राह्यं चासदिष्यताम् ॥८॥

रूपवत्त्वाद्यसत्त्वान्न दृष्ट्यादेः कर्मता यथा ।
एवं विज्ञानकर्मत्वं भूम्नो नास्तीति गम्यते ॥९॥

## दृशिस्वरूपपरमार्थदर्शनप्रकरणम् ॥ १० ॥

दृशिस्वरूपं गगनोपमं परं सकृद्विभातं त्वजमेकमक्षरम् ।
अलेपकं सर्वगतं यदद्वयं तदेव चाहं सततं विमुक्त ॐ ॥१॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

दृशिस्तु शुद्धोऽहमविक्रियात्मको न मेऽस्ति कश्चिद्विषयः स्वभावतः ।
पुरस्तिरश्चोर्ध्वमधश्च सर्वतः सम्पूर्णभूमा त्वज आत्मनि स्थितः ॥२॥

अजोऽमरश्चैव तथाऽजरोऽमृतः स्वयंप्रभः सर्वगतोऽहमद्वयः ।
न कारणं कार्यमतीव निर्मलः सदैकतृप्तश्च ततो विमुक्त ॐ ॥३॥

सुषुप्तजाग्रत्स्वपतश्च दर्शनं न मेऽस्ति किञ्चित्तु मतेर्हि मोहनम् ।
स्वतश्च तेषां परतोऽप्यसत्त्वतस्तुरीय एवास्मि सदा दृगद्वयः ॥४॥

शरीरबुद्धीन्द्रियदुःखसंततिर्न मे न चाहं मम निर्विकारतः ।
असत्त्वहेतोश्च तथैव संततेरसत्त्वमस्याः स्वपतो हि दृश्यवत् ॥५॥

इदं तु सत्यं मम नास्ति विक्रिया विकारहेतुर्न हि मेऽद्वयत्वतः ।
न पुण्यपापे न च मोक्षबन्धने न चास्ति वर्णाश्रमताऽशरीरतः ॥६॥

अनादितो निर्गुणतो न कर्म मे फलं च तस्मात्परमोऽहमद्वयः ।
यथा नभः सर्वगतं न लिप्यते तथा ह्यहं देहगतोऽपि सूक्ष्मतः ॥७॥

सदा च भूतेषु समोऽहमीश्वरः क्षराक्षराभ्यां परमो ह्यथोत्तमः ।
परात्मतत्त्वं च तथाऽद्वयोऽपि सन् विपर्ययेणाभिमतस्त्वविद्यया ॥८॥

अविद्यया भावनया च कर्मभिर्विविक्त आत्माऽव्यवधिः सुनिर्मलः ।
दृगादिशक्तिप्रचितोऽहमद्वयः स्थितः स्वरूपे गगनं यथाऽचलम् ॥९॥

अहं परं ब्रह्म विनिश्चयात्मदृङ् न जायते भूय इति श्रुतेर्वचः ।
न चैव बीजेऽप्यसति प्रजायते फलं न जन्मास्ति ततो ह्यमोहता ॥१०॥

ममेदमित्थं च तथेदमीदृशं तथाहमेवं न परो न वान्यथा ।
विमूढतैवं न जनस्य कल्पना सदा समे ब्रह्मणि चाद्वये शिवे ॥११॥

यदद्वयं ज्ञानमतीव निर्मलं महात्मनां तत्र न शोकमोहता ।
तयोरभावे न हि जन्म कर्म वा भवेदयं वेदविदां विनिश्चयः ॥१२॥

सुषुप्तवज्जाग्रति यो न पश्यति द्वयं तु पश्यन्नपि चाद्वयत्वतः ।
तथा च कुर्वन्नपि निष्क्रियश्च यः स आत्मविन्नान्य इतीह निश्चयः ॥१३॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

इतीदमुक्तं परमार्थदर्शनं मया हि वेदान्तविनिश्चितं परम् ।
विमुच्यतेऽस्मिन् यदि निश्चितो भवेन्न लिप्यते व्योम इवेह कर्मभिः ।१४।

## ईक्षितृत्वप्रकरणम् ॥ ११ ॥

ईक्षितृत्वं स्वतःसिद्धं जन्तूनां च ततोऽन्यता ।
अज्ञानादित्यतोऽन्यत्वं सदसीति निवर्त्यते ॥१॥

एतावद्ध्यमृतत्वं न किंचिदन्यत्सहायकम् ।
ज्ञानस्येति ब्रुवच्छास्त्रं सलिङ्गं कर्म बाधते ॥२॥

सर्वेषां मनसो वृत्तमविशेषेण पश्यतः ।
तस्य मे निर्विकारस्य विशेषः स्यात्कथंचन ॥३॥

मनोवृत्तं मनश्चैव स्वप्नवज्जाग्रतोक्षितुः ।
संप्रसादे द्वयासत्त्वाच्चिन्मात्रः सर्वगोऽव्ययः ॥४॥

स्वप्नः सत्यो यथाऽऽबोधाद्देहात्मत्वं तथैव च ।
प्रत्यक्षादेः प्रमाणत्वं जाग्रत्स्यादात्मवेदनात् ॥५॥

व्योमवत्सर्वभूतस्थो भूतदोषैर्विवर्जितः ।
साक्षी चेताऽगुणः शुद्धो ब्रह्मैवास्मि स केवलः ॥६॥

नामरूपक्रियाभ्योऽन्यो नित्यमुक्तस्वरूपवान् ।
अहमात्मा परं ब्रह्म चिन्मात्रोऽहं सदाऽद्वयः ॥७॥

अहं ब्रह्मास्मि कर्ता च भोक्ता चास्मीति ये विदुः ।
ते नष्टा ज्ञानकर्मभ्यां नास्तिकाः स्युर्न संशयः ॥८॥

धर्माधर्मफलैर्योग इष्टोऽदृष्टो यथाऽऽत्मनः ।
शास्त्राद्ब्रह्मत्वमप्यस्य मोक्षो ज्ञानात्तथेष्यताम् ॥९॥

या माहारजनाद्यास्ता वासनाः स्वप्नदर्शिभिः ।
अनुभूयन्त एवेह ततोऽन्यः केवलो दृशिः ॥१०॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

कोशादिव विनिष्कृष्टः कार्यकारणवर्जितः ।
यथाऽसिर्दृश्यते स्वप्ने तद्वद्‌बोद्धा स्वयंप्रभः ॥११॥

आपेषात्प्रतिबुद्धस्य ज्ञस्य स्वाभाविकं पदम् ।
उक्तं नेत्यादिवाक्येन कल्पितस्यापनेतृणा ॥१२॥

महाराजादयो लोका मयि यद्वत्प्रकल्पिताः ।
स्वप्ने, तद्वद्‌द्वयं विद्याद्रूपं वासनया सह ॥१३॥

देहलिङ्गात्मना कार्या वासनारूपिणा क्रियाः ।
नेति नेत्यात्यरूपत्वान्न मे कार्या क्रिया क्वचित् ॥१४॥

न ततोऽमृतताऽऽशास्ति कर्मणोऽज्ञानहेतुतः ।
मोक्षस्य ज्ञानहेतुत्वान्न तदन्यदपेक्षते ॥१५॥

अमृतं चाभयं नार्तं नेतीत्यात्मा प्रियो मम ।
विपरीतमतोऽन्यद्यत् त्यजेत्तत्सक्रियं ततः ॥१६॥

## प्रकाशप्रकरणम् ॥ १२ ॥

प्रकाशस्थं यथा देहं सालोकमभिमन्यते ।
द्रष्ट्राभासं तथा चित्तं द्रष्टाऽहमिति मन्यते ॥१॥

यदेव दृश्यते लोके तेनाभिन्नत्वमात्मनः ।
प्रपद्यते ततो मूढस्तेनात्मानं न विन्दति ॥२॥

दशमस्य नवात्मत्वप्रतिपत्तिवदात्मनः ।
दृश्येषु तद्वदेवायं मूढो लोको न चान्यथा ॥३॥

त्वं कुरु त्वं तदेवेति प्रत्ययावेककालिकौ ।
एकनीडौ कथं स्यातां विरुद्धौ न्यायतो वद ॥४॥

देहाभिमानिनो दुःखं नादेहस्य स्वभावतः ।
स्वापवत्तत्प्रहाणाय तत्त्वमित्युच्यते दृशेः ॥५॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

दृशेश्छाया यदाऽऽरूढा मुखच्छायेव दर्शने ।
पश्यंस्तं प्रत्ययं योगी दृष्ट आत्मेति मन्यते ॥६॥

तं च मूढं च यद्यन्यं प्रत्ययं वेत्ति नो दृशेः ।
स एव योगिनां श्रेष्ठो नेतरः स्यान्न संशयः ॥७॥

विज्ञातेर्यस्तु विज्ञाता स त्वमित्युच्यते यतः ।
स स्यादनुभवस्तस्य ततोऽन्योऽनुभवो मृषा ॥८॥

दृशिरूपे सदा नित्ये दर्शनादर्शने मयि ।
कथं स्यातां ततो नान्य इष्यतेऽनुभवस्ततः ॥९॥

यत्स्थस्तापो रवेर्देहे दृशेः स विषयो यथा ।
सत्त्वस्थस्तद्वदेवेह दृशेः स विषयस्तथा ॥१०॥

प्रतिषिद्धेदमंशो ज्ञः खमिवैकरसोऽद्वयः ।
नित्यमुक्तः सदा शुद्धः ब्रह्मास्मि केवलः ॥११॥

विज्ञातुर्नैव विज्ञाता परोऽन्यः संभवत्यतः ।
विज्ञाताऽहं परो मुक्तः सर्वभूतेषु सर्वदा ॥१२॥

यो वेदालुप्तदृष्टित्वमात्मनोऽकर्तृतां यथा ।
ब्रह्मवित्त्वं तथा मुक्त्वा स आत्मज्ञो न चेतरः ॥१३॥

ज्ञातैवाहमविज्ञेयः शुद्धो मुक्तः सदेत्यपि ।
विवेकी प्रत्ययो बुद्धेर्दृश्यत्वान्नाशवान्यतः ॥१४॥

अलुप्ता त्वात्मनो दृष्टिर्नोत्पाद्या कारकैर्यतः ।
दृश्यथा चान्यया दृष्ट्या जन्यताऽस्याः प्रकल्पिता ॥१५॥

देहात्मबुद्ध्यपेक्षत्वादात्मनः कर्तृता मृषा ।
नैव किंचित्करोमीति सत्या बुद्धिः प्रमाणजा ॥१६॥

कर्तृत्वं कारकापेक्षमकर्तृत्वं स्वभावतः ।
कर्ता भोक्तेति विज्ञानं मृषैवेति सुनिश्चितम् ॥१७॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

इदं ते युक्तं वा परमशिव कारुण्यजलधे
गतौ तिर्यग्रूपं तव पदशिरोदर्शनधिया ।
हरिब्रह्माणौ तौ दिवि भुवि चरन्तौ श्रमयुतौ
कथं शंभो स्वामिन्कथय मम वेद्योऽसि पुरतः ॥९९॥

स्तोत्रेणालमहं प्रवच्मि न मृषा देवा विरिञ्चादयः
स्तुत्यानां गणनाप्रसङ्गसमये त्वामग्रगण्यं विदुः ।
माहात्म्याग्रविचारणप्रकरणे धानातुषस्तोमव-
द्धूतास्त्वां विदुरुत्तमोत्तमफलं शंभो भवत्सेवकाः ॥१००॥

॥ इति शिवानन्दलहरी ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# काशीपञ्चकम्

मनोनिवृत्तिः परमोपशान्तिः सा तीर्थवर्या मणिकर्णिका च ।
ज्ञानप्रवाहा विमलादिगङ्गा सा काशिकाऽहं निजबोधरूपा ॥१॥

यस्यामिदं कल्पितमिन्द्रजालं चराचरं भाति मनोविलासम् ।
सच्चित्सुखैका परमात्मरूपा सा काशिकाऽहं निजबोधरूपा ॥२॥

कोशेषु पञ्चस्वधिराजमानाबुद्धिर्भवानी प्रदिदेहगेहम् ।
साक्षी शिवः सर्वगतोऽन्तरात्मा सा काशिकाऽहं निजबोधरूपा ॥३॥

काश्यां हि काशते काशी काशी सर्वप्रकाशिका ।
सा काशी विदिता येन तेन प्राप्ता हि काशिका ॥४॥

काशीक्षेत्रं शरीरं त्रिभुवनजननी व्यापिनी ज्ञानगङ्गा
भक्तिः श्रद्धा गयेयं निजगुरुचरणध्यानयोगः प्रयागः ।
विश्वेशोऽयं तुरीयः सकलजनमनःसाक्षिभूतोऽन्तरात्मा
देहे सर्वं मदीये यदि वसति पुनस्तीर्थमन्यत्किमस्ति ॥५॥

॥ इति काशीपञ्चकम् ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# श्रीदक्षिणामूर्तिस्तोत्रम् (१)

उपासकानां यदुपासनीयमुपात्तवासं वटशाखिमूले ।
दद्धाम दाक्षिण्यजुषा स्वमूर्त्या जागर्तु चित्ते मम बोधरूपम् ॥१॥

अद्राक्षमक्षीणदयानिधानमाचार्यमाद्यं वटमूलभागे ।
मौनेन मन्दस्मितभूषितेन महर्षिलोकस्य तमो नुदन्तम् ॥२॥

विद्रावितशेषतमोगणेन मुद्राविशेषेण मुहुर्मुनीनाम् ।
निरस्य मायां दयया विधत्ते देवो महांस्तत्त्वमसीति बोधम् ॥३॥

अपारकारुण्यसुधातरङ्गैरपाङ्गपातैरवलोकयन्तम् ।
कठोरसंसारनिदाघतप्तान्मुनीनहं नौमि गुरुं गुरूणाम् ॥४॥

ममाद्यदेवो वटमूलवासी कृपाविशेषात्कृतसंनिधानः ।
ओंकाररूपामुपदिश्य विद्यामाविद्यकध्वान्तमपाकरोतु ॥५॥

कलाभिरिन्दोरिव कल्पिताङ्गं मुक्ताकलापैरिव बद्धमूर्तिम् ।
आलोकये देशिकमप्रमेयमनाद्यविद्यातिमिरप्रभातम् ॥६॥

स्वदक्षजानुस्थितवामपादं पादोदरालंकृतयोगपट्टम् ।
अपस्मृतेराहितपादमङ्गं प्रणौमि देवं प्रणिधानवन्तम् ॥७॥

तत्त्वार्थमन्तेवसतामृषीणां युवाऽपि यः सन्नुपदेष्टुमीष्टे ।
प्रणौमि तं प्राक्तनपुण्यजालैराचार्यमाश्चर्यगुणाधिवासम् ॥८॥

एकेन मुद्रां परशुं करेण करेण चान्येन मृगं दधानः ।
स्वजानुविन्यस्तकरः पुरस्तादाचार्यचूडामणिराविरस्तु ॥९॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

आलेपवन्तं मदनाङ्गभूत्या शार्दूलकृत्त्या परिधानवन्तम् ।
आलोकये कंचन देशिकेन्द्रमज्ञानवाराकरवाडवाग्निम् ॥१०॥

चारुस्मितं सोमकलावतंसं वीणाधरं व्यक्तजटाकलापम् ।
उपासते केचन योगिनस्त्वामुपात्तनादानुभवप्रमोदम् ॥११॥

उपासते यं मुनयः शुकाद्या निराशिषो निर्ममताधिवासाः ।
तं दक्षिणामूर्तितनुं महेशमुपास्महे मोहमहार्तिशान्त्यै ॥१२॥

कान्त्या निन्दितकुन्दकन्दलवपुर्न्यग्रोधमूले वस-
न्कारुण्यामृतवारिभिर्मुनिजनं संभावयन्वीक्षितैः ।
मोहध्वान्तविभेदनं विरचयन्बोधेन तत्तादृशा
देवस्तत्त्वमसीति बोधयतु मां मुद्रावता पाणिना ॥१३॥

अगौरगात्रैरललाटनेत्रैरशान्तवेषैरभुजङ्गभूषैः ।
अबोधमुद्रैरनपास्तनिद्रैरपूर्णकामैरमरैरलं नः ॥१४॥

दैवतानि कति सन्ति चावनौ नैव तानि मनसो मतानि मे ।
दीक्षितं जडधियामनुग्रहे दक्षिणाभिमुखमेव दैवतम् ॥१५॥

मुदिताय मुग्धशशिनावतंसिने भसितावलेपरमणीयमूर्तये ।
जगदिन्द्रजालरचनापटीयसे महसे नमोऽस्तु वटमूलवासिने ॥१६॥

व्यालम्बिनीभिः परितो जटाभिः कलावशेषेण कलाधरेण ।
पश्यल्ललाटेन मुखेन्दुना च प्रकाशसे चेतसि निर्मलानाम् ॥१७॥

उपासकानां त्वमुमासहायः पूर्णेन्दुभावं प्रकटीकरोषि ।
यदद्य ते दर्शनमात्रतो मे द्रवत्यहो मानसचन्द्रकान्तः ॥१८॥

यस्ते प्रसन्नामनुसन्दधानो मूर्तिं मुदा मुग्धशशाङ्कमौलेः ।
ऐश्वर्यमायुर्लभते च विद्यामन्ते च वेदान्तमहारहस्यम् ॥१९॥

॥ इति श्रीदक्षिणामूर्तिस्तोत्रम् ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

# प्रातःस्मरणस्तोत्रम्

प्रातः स्मरामि हृदि संस्फुरदात्मतत्त्वं
सच्चित्सुखं परमहंसगतिं तुरीयम् ।
यः स्वप्नजागरसुषुप्तमवैति नित्यं
तद्ब्रह्म निष्कलमहं न च भूतसङ्घः ॥१॥

प्रातर्भजामि मनसां वचसामगम्यं
वाचो विभान्ति निखिला यदनुग्रहेण ।
यं नेति नेति वचनैर्निगमा अवोचं-
स्तं देवदेवमजमच्युतमाहुरग्र्यम् ॥२॥

प्रातर्नमामि तमसः परमर्कवर्णं
पूर्णं सनातनपदं पुरुषोत्तमाख्यम् ।
यस्मिन्निदं जगदशेषमशेषमूर्तौ
रज्ज्वां भुजंगम इव प्रतिभासितं वै ॥३॥

श्लोकत्रयमिदं पुण्यं लोकत्रयविभूषणम् ।
प्रातःकाले पठेद्यस्तु स गच्छेत्परमं पदम् ॥

॥ इति प्रातःस्मरणस्तोत्रम् ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# षटपदीस्तोत्रम्

अविनयमपनय विष्णो दमय मनः शमय विषयमृगतृष्णाम् ।
भूतदयां विस्तारय तारय संसारसागरतः ॥१॥

दिव्यधुनीमकरन्दे परिमलपरिभोगसच्चिदानन्दे ।
श्रीपतिपदारविन्दे भवभयखेदच्छिदे वन्दे ॥२॥

सत्यपि भेदापगमे नाथ तवाहं न मामकीनस्त्वम् ।
सामुद्रो हि तरङ्गः क्वचन समुद्रो न तारङ्गः ॥३॥

उद्धृतनग नगभिदनुज दनुजकुलामित्र मित्रशशिदृष्टे ।
दृष्टे भवति प्रभवति न भवति किं भवतिरस्कारः ॥४॥

मत्स्यादिभिरवतारैरवतारवताऽवता सदा वसुधाम् ।
परमेश्वर परिपाल्यो भवता भवतापभीतोऽहम् ॥५॥

दामोदर गुणमन्दिर सुन्दरवदनारविन्द गोविन्द ।
भवजलधिमथनमन्दर परमं दरमपनय त्वं मे ॥६॥

नारायण करुणामय शरणं करवाणि तावकौ चरणौ ।
इति षट्पदी मदीये वदनसरोजे सदा वसतु ॥७॥

॥ इति षट्पदी ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# निर्गुणमानसपूजा

शिष्य उवाच—

अखण्डे सच्चिदानन्दे निर्विकल्पैकरूपिणि ।
स्थितेऽद्वितीयभावेऽपि कथं पूजा विधीयते ॥१॥

पूर्णस्यावाहनं कुत्र सर्वाधारस्य चासनम् ।
स्वच्छस्य पाद्यमर्घ्यं च शुद्धस्याचमनं कुतः ॥२॥

निर्मलस्य कुतः स्नानं वासो विश्वोदरस्य च ।
अगोत्रस्य त्ववर्णस्य कुतस्तस्योपवीतकम् ॥३॥

निर्लेपस्य कुतो गन्धः पुष्पं निर्वासनस्य च ।
निर्विशेषस्य का भूषा कोऽलंकारो निराकृतेः ॥४॥

निरञ्जनस्य किं धूपैर्दीपैर्वा सर्वसाक्षिणः ।
निजानन्दैकतृप्तस्य नैवेद्यं किं भवेदिह ॥५॥

विश्वानन्दयितुस्तस्य किं ताम्बूलं प्रकल्पते ।
स्वयंप्रकाशचिद्रूपो योऽसावर्कादिभासकः ॥६॥

गीयते श्रुतिभिस्तस्य नीराजनविधिः कुतः ।
प्रदक्षिणमनन्तस्य प्रणामोऽद्वयवस्तुनः ॥७॥

वेदवाचामवेद्यस्य किं वा स्तोत्रं विधीयते ।
अन्तर्बहिः संस्थितस्य कथमुद्वासनं भवेत् ॥८॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

**श्रीगुरुरुवाच—**

आराधयामि मणिसन्निभमात्मलिङ्गं
मायापुरीहृदयपङ्कजसन्निविष्टम् ।
श्रद्धानदीविमलचित्तजलाभिषेकै-
र्नित्यं समाधिकुसुमैरपुनर्भवाय ॥९॥

अयमेकोऽवशिष्टोऽस्मीत्येवमावाहयेच्छिवम् ।
आसनं कल्पयेत्पश्चात्स्वप्रतिष्ठात्मचिन्तनम् ॥१०॥

पुण्यपापरजःसङ्गो मम नास्तीति वेदनम् ।
पाद्यं समर्पयेद्विद्वान्सर्वकल्मषनाशनम् ॥११॥

अनादिकल्पविधृतमूलाज्ञानजलाञ्जलिम् ।
विसृजेदात्मलिङ्गस्य तदेवार्घ्यसमर्पणम् ॥१२॥

ब्रह्मानन्दाब्धिकल्लोलकणकोट्यंशलेशकम् ।
पिबन्तीन्द्रादय इति ध्यानमाचमनं मतम् ॥१३॥

ब्रह्मानन्दजलेनैव लोकाः सर्वे परिप्लुताः ।
अक्लेद्योऽयमिति ध्यानमभिषेचनमात्मनः ॥१४॥

निरावरणचैतन्यं प्रकाशोऽस्मीति चिन्तनम् ।
आत्मलिङ्गस्य सद्वस्त्रमित्येवं चिन्तयेन्मुनिः ॥१५॥

त्रिगुणात्माशेषलोकमालिकासूत्रमस्म्यहम् ॥
इति निश्चय एवात्र ह्युपवीतं परं मतम् ॥१६॥

अनेकवासनामिश्रप्रपञ्चोऽयं धृतो मया ।
नान्येनेत्यनुसंधानमात्मनश्चन्दनं भवेत् ॥१७॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

रजःसत्त्वतमोवृत्तित्यागरूपैस्तिलाक्षतैः ।
आत्मलिङ्गं यजेन्नित्यं जीवन्मुक्तिप्रसिद्धये ॥१८॥

ईश्वरो गुरुरात्मेति भेदत्रयविवर्जितैः ।
विल्वपत्रैरद्वितीयैरात्मलिङ्गं यजेच्छिवम् ॥१९॥

समस्तवासनात्यागं धूपं तस्य विचिन्तयेत् ।
ज्योतिर्मयात्मविज्ञानं दीपं संदर्शयेद्बुधः ॥२०॥

नैवेद्यमात्मलिङ्गस्य ब्रह्माण्डाख्यं महोदनम् ।
पिबानन्दरसं स्वादु मृत्युरस्योपसेचनम् ॥२१॥

अज्ञानोच्छिष्टकरस्य क्षालनं ज्ञानवारिणा ।
विशुद्धस्यात्मलिङ्गस्य हस्तप्रक्षालनं स्मरेत् ॥२२॥

रागादिगुणशून्यस्य शिवस्य परमात्मनः ।
सरागविषयाभ्यासत्यागस्ताम्बूलचर्वणम् ॥२३॥

अज्ञानध्वान्तविध्वंसप्रचण्डमतिभास्करम् ।
आत्मनो ब्रह्मताज्ञानं नीराजनमिहात्मनः ॥२४॥

विविधब्रह्मसंदृष्टिमालिकाभिरलंकृतम् ।
पूर्णानन्दात्मतादृष्टि पुष्पाञ्जलिमनुस्मरेत् ॥२५॥

परिभ्रमन्ति ब्रह्माण्डसहस्राणि मयीश्वरे ।
कूटस्थाचलरूपोऽहमिति ध्यानं प्रदक्षिणम् ॥२६॥

विश्ववन्द्योऽहमेवास्मि नास्ति वन्द्यो मदन्यकः ।
इत्यालोचनमेवात्र स्वात्मलिङ्गस्य वन्दनम् ॥२७॥

आत्मनः सत्क्रिया प्रोक्ता कर्तव्याभावभावना ।
नामरूपव्यतीतात्मचिन्तनं नामकीर्तनम् ॥२८॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

श्रवणं तस्य देवस्य श्रोतव्याभावचिन्तनम् ।
मननं त्वात्मलिङ्गस्य मन्तव्याभावचिन्तनम् ॥२९॥

ध्यातव्याभावविज्ञानं निदिध्यासनमात्मनः ।
समस्तभ्रान्तिविक्षेपराहित्येनात्मनिष्ठता ॥३०॥

समाधिरात्मनो नाम नान्यच्चित्तस्य विभ्रमः ।
तत्रैवं ब्रह्मणि सदा चित्तविश्रान्तिरिष्यते ॥३१॥

एवं वेदान्तकल्पोक्तस्वात्मलिङ्गप्रपूजनम् ।
कुर्वन्नामरणं वाऽपि क्षणं वा सुखमाहितः ॥३२॥

सर्वदुर्वासनाजालं पदपांसुमिव त्यजेत् ।
वधूयाज्ञानदुःखौघं मोक्षानन्दं समश्नुते ॥३३॥

॥ इति निर्गुणमानसपूजा ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# अद्वैतपञ्चरत्नम्

नाहं देहो नेन्द्रियाण्यन्तरङ्गो
नाहंकारः प्राणवर्गो न बुद्धिः ।
दारापत्यक्षेत्रवित्तादिदूरः
साक्षी नित्यः प्रत्यगात्मा शिवोऽहम् ॥१॥

रज्ज्वज्ञानाद्भाति रज्जौ यथाहिः
स्वात्माज्ञानादात्मनो जीवभावः ।
आप्तोक्त्याऽहिभ्रान्तिनाशे स रज्जु-
र्जीवो नाहं देशिकोक्त्या शिवोऽहम् ॥२॥

आभातीदं विश्वमात्मन्यसत्यं
सत्यज्ञानानन्दरूपे विमोहात् ।
निद्रामोहात्स्वप्नवत्तन्न सत्यं
शुद्धः पूर्णो नित्य एकः शिवोऽहं ॥३॥

नाहं जातो न प्रवृद्धो न नष्टो
देहस्योक्ताः प्राकृताः सर्वधर्माः ।
कर्तृत्वादिश्चिन्मयस्यास्ति नाहं-
कारस्यैव ह्यात्मनो मे शिवोऽहम् ॥४॥

मत्तो नान्यत्किंचिदत्रास्ति विश्वं
सत्यं बाह्यं वस्तु मायोपक्लृप्तम् ।
आदर्शान्तर्भासमानस्य तुल्यं
मय्यद्वैते भाति तस्माच्छिवोऽहम् ॥५॥

॥ इति अद्वैतपञ्चरत्नम् ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# धन्याष्टकम्

तज्ज्ञानं प्रशमकरं यदिन्द्रियाणां
तज्ज्ञेयं यदुपनिषत्सु निश्चितार्थम् ।
ते धन्या भुवि परमार्थनिश्चितेहाः
शेषास्तु भ्रमनिलये परिभ्रमन्तः ॥१॥

आदौ विजित्य विषयान्मदमोहराग-
द्वेषादिशत्रुगणमाहृतयोगराज्याः ।
ज्ञात्वा मतं समनुभूय परात्मविद्या-
कान्तासुखं वनगृहे विचरन्ति धन्याः ॥२॥

त्यक्त्वा गृहे रतिमधोगतिहेतुभूता-
मात्मेच्छयोपनिषदर्थरसं पिबन्तः ।
वीतस्पृहा विषयभोगपदे विरक्ता
धन्याश्चरन्ति विजनेषु विमुक्तसङ्गाः ॥३॥

त्यक्त्वा ममाहमिति बन्धकरे पदे द्वे
मानावमानसदृशाः समदर्शिनश्च ।
कर्तारमन्यमवगम्य तदर्पितानि
कुर्वन्ति कर्मपरिपाकफलानि धन्याः ॥४॥

त्यक्त्वैषणात्रयमवेक्षितमोक्षमार्गा
भैक्षामृतेन परिकल्पितदेहयात्राः ।
ज्योतिः परात्परतरं परमात्मसंज्ञं
धन्या द्विजा रहसि हृद्यवलोयन्ति ॥५॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

नासन्न सन्त सदसन्न महन्न चाणु
न स्त्री पुमान्न च नपुंसकमेकबीजम् ।
यैर्ब्रह्म तत्सममुपासितमेकचित्तै-
र्धन्या विरेजुरितरे भवपाशबद्धाः ॥६॥

अज्ञानपङ्कपरिमग्नमपेतसारं
दुःखालयं मरणजन्मजरावसक्तम् ।
संसारबन्धनमनित्यमवेक्ष्य धन्या
ज्ञानासिना तदवशीर्य विनिश्चयन्ति ॥७॥

शान्तैरनन्यमतिभिर्मधुरस्वभावै-
रेकत्वनिश्चितमनोभिरपेतमोहैः ।
साकं वनेषु विदितात्मपदस्वरूपै-
स्तद्वस्तु सम्यगनिशं विमृशन्ति धन्याः ॥८॥

॥ इति धन्याष्टकम् ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# निर्वाणमञ्जरी

अहं नामरो नैव मर्त्यो न दैत्यो न गन्धर्वयक्षः पिशाचप्रभेदः ।
पुमान्नैव न स्त्री तथा नैव षण्ढः प्रकृष्टप्रकाशस्वरूपः शिवोऽहम् ॥१॥

अहं नैव बालो युवा नैव वृद्धो न वर्णी न च ब्रह्मचारी गृहस्थः ।
वनस्थोऽपि नाहं न संन्यस्तधर्मा जगज्जन्मनाशैकहेतुः शिवोऽहम् ॥२॥

अहं नैव मेयस्तिरोभूतमायस्तथैवेक्षितुं मां पृथङ्नास्त्युपायः ।
समाश्लिष्टकायत्रयोऽप्यद्वितीयः सदाऽतीन्द्रियः सर्वरूपः शिवोऽहम् ॥३॥

अहं नैव मन्ता न गन्ता न वक्ता
न कर्ता न भोक्ता न मुक्ताश्रमस्थः ।
यथाऽहं मनोवृत्तिभेदस्वरूप-
स्तथा सर्ववृत्तिप्रदीपः शिवोऽहम् ॥४॥

न मे लोकयात्राप्रवाह प्रवृत्ति-
र्न मे बन्धबुद्धया दुरीहानिवृत्तिः ।
प्रवृत्तिर्निवृत्त्याऽस्य चित्तस्य वृत्ति-
र्यतस्त्वन्वहं तत्स्वरूपः शिवोऽहम् ॥५॥

निदानं यदज्ञानकार्यस्य कार्यं
विना यस्य सत्त्वं स्वतो नैव भाति ।
यदाद्यन्तमध्यान्तरालान्तराल-
प्रकाशात्मकं स्यात्तदेवाहमस्मि ॥६॥

यतोऽहं न बुद्धिर्न मे कार्यसिद्धि-
र्यतो नाहमङ्गं न मे लिङ्गभङ्गः ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

हृदाकाशवर्ती गताङ्गत्रयार्तिः
सदा सच्चिदानन्दमूर्तिः शिवोऽहम् ॥७॥

यदासीद्विलासाद्विकारो जगद्य-
द्विकाराश्रयो नाद्वितीयत्वतः स्यात् ।
मनोबुद्धिचित्ताहमाकारवृत्ति-
प्रवृत्तिर्यतः स्यात्तदेवाहमस्मि ॥८॥

यदन्तर्बहिर्व्यापकं नित्यशुद्धं
यदेकं सदा सच्चिदानन्दकन्दम् ।
यतः स्थूलसूक्ष्मप्रपञ्चस्य भानं
यतस्तत्प्रसूतिस्तदेवाहमस्मि ॥९॥

यदर्केन्दुविद्युत्प्रभाजालमाला-
विलासास्पदं यत्स्वभेदादिशून्यम् ।
समस्तं जगद्यस्य पादात्मकं स्या-
द्यतः शक्तिभानं तदेवाहमस्मि ॥१०॥

यतः कालमृत्युर्बिभेति प्रकामं
यतश्चित्तबुद्धीन्द्रियाणां विलासः ।
हरिब्रह्मरुद्रेन्द्रचन्द्रादिनाम-
प्रकाशो यतः स्यात्तदेवाहमस्मि ॥११॥

यदाकाशवत्सर्वगं शान्तरूपं परं ज्योतिराकारशून्यं वरेण्यम् ।
यदाद्यन्तशून्यं परं शंकराख्यं यदन्तर्विभाव्यं तदेवाहमस्मि ॥१२॥

॥ इति निर्वाणमञ्जरी ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# निर्वाणषट्कम्

मनोबुद्ध्यहंकारचित्तानि नाहं न कर्णं न जिह्वा न च घ्राणनेत्रे।
न च व्योम भूमिर्न तेजो न वायुश्चिदानन्दरूपः शिवोऽहं शिवोऽहम् ॥१॥

न च प्राणसंज्ञो न वै पञ्चवायुर्न
वा सप्तधातुर्न वा पञ्चकोशः।
न वाक् पाणिपादौ न चोपस्थपायू
चिदानन्दरूपः शिवोऽहं शिवोऽहम् ॥२॥

न मे द्वेषरागौ न मे लोभमोहौ
मदो नैव मे नैव मात्सर्यभावः।
न धर्मो न चार्थो न कामो न मोक्ष-
श्चिदानन्दरूपः शिवोऽहं शिवोऽहम् ॥३॥

न पुण्यं न पापं न सौख्यं न दुःखं
न मन्त्रो न तीर्थं न वेदा न यज्ञाः।
अहं भोजनं नैव भोज्यं न भोक्ता
चिदानन्दरूपः शिवोऽहं शिवोऽहम् ॥४॥

न मृत्युर्न शङ्का न मे जातिभेदः
पिता नैव मे नैव माता च जन्म।
न बन्धुर्न मित्रं गुरुर्नैव शिष्य-
श्चिदानन्दरूपः शिवोऽहं शिवोऽहम् ॥५॥

अहं निर्विकल्पो निराकाररूपो
विभुत्वाच्च सर्वत्र सर्वेन्द्रियाणाम्।
न चासंगतं नैव मुक्तिर्न बन्ध-
श्चिदानन्दरूपः शिवोऽहं शिवोऽहम् ॥६॥

॥ इति निर्वाणषट्कम् ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# प्रौढानुभूतिः

प्रौढप्रौढनिजानुभूतिगलितद्वैतेन्द्रजालो गुरु-
गूँढं गूढमघौघदृष्टकुधियां स्पष्टं सुधीशालिनाम् ।
स्वान्ते सम्यगिहानुभूतमपि सच्छिष्यावबोधाय त-
त्सत्यं संस्मृतवान्समस्तजगतां नैजं निजालोकनात् ॥१॥

द्वैतं मय्यखिलं समुत्थितमिदं मिथ्या मनःकल्पितं
तोयं तोयविवर्जिते मरुतले भ्रान्त्यैव सिद्धं न हि ।
यद्येवं खलु दृश्यमेतदखिलं नाहं न वा तन्मम
प्रौढानन्दचिदेकसन्मयवपुः शुद्धोऽस्म्यखण्डोऽस्म्यहम् ॥२॥

देहो नाहमचेतनोऽयमनिशं कुड्यादिवन्निश्चितो
नाहं प्राणमयोऽपि वा दृतिधृतो वायुर्यथा निश्चितः ।
सोऽहं नापि मनोमयः कपिचलः कार्पण्यदुष्टो न वा
बुद्धिर्बुद्धकुवृत्तिकेव कुहना नाज्ञानमन्धंतमः ॥३॥

नाहं खादिरपि स्फुटं मरुतलभ्राजत्पयः साम्यत-
स्तेभ्यो नित्यविलक्षणोऽखिलदृशिः सौरप्रकाशो यथा ।
दृश्यैः सङ्गविवर्जितो गगनवत्संपूर्णरूपोऽस्म्यहं
वस्तुस्थित्यनुरोधतस्त्वहमिदं वीच्यादि सिन्धुर्यथा ॥४॥

निर्द्वैतोऽस्म्यहमस्मि निर्मलचिदाकाशोऽस्मि पूर्णोऽस्म्यहं
निर्देहोऽस्मि निरिन्द्रियोऽस्मि नितरां निष्प्राणवर्गोऽस्म्यहम् ।
निर्मुक्ताशुभमानसोऽस्मि विगलद्विज्ञानकोशोऽस्म्यहं
निर्मायोऽस्मि निरन्तरोऽस्मि विपुलप्रौढप्रकाशोऽस्म्यहम् ॥५॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

मत्तोऽन्यन्न हि किंचिदस्ति यदि चिद्भास्यं ततस्तन्मृषा
गुञ्जावह्निवदेव सर्वकलनाधिष्ठानभूतोऽस्म्यहम् ।
सर्वस्यापि दृगस्म्यहं समरसः शान्तोऽस्म्यपापोऽस्म्यहं
पूर्णोऽस्मि द्वयवर्जितोऽस्मि विपुलाकाशोऽस्मि नित्योऽस्म्यहम् ॥६॥

मय्यस्मिन्परमार्थके श्रुतिशिरोवेद्ये स्वतो भासने
का वा विप्रतिपत्तिरेतदखिलं भात्येव यत्संनिधेः ।
सौरालोकवशात्प्रतीतमखिलं पश्यन्न तस्मिञ्जनः
संदिग्धोऽस्त्यत एव केवलशिवः कोऽपि प्रकाशोऽस्म्यहम् ॥७॥

नित्यस्फूर्तिमयोऽस्मि निर्मलसदाकाशोऽस्मि शान्तोऽस्म्यहं
नित्यानन्दमयोऽस्मि निर्गतमहामोहान्धकारोऽस्म्यहम् ।
विज्ञातं परमार्थतत्त्वमखिलं नैजं निरस्ताशुभं
मुक्तप्राप्यमपास्तभेदकलनाकैवल्यसंज्ञोऽस्म्यहम् ॥८॥

स्वाप्नद्वैतवदेन जाग्रतमपि द्वैतं मनोमात्रकं
मिथ्येत्येव विहाय सच्चिदमलस्वात्मैकरूपोऽस्म्यहम् ।
यद्वा वेद्यमशेषमेतदनिशं मद्रूपमेवेत्यपि
ज्ञात्वा त्यक्तमरुन्महोदधिरिव प्रौढो गभीरोऽस्म्यहम् ॥९॥

गन्तव्यं किमिहास्ति सर्वपरिपूर्णस्याप्यखण्डाकृतेः
कर्तव्यं किमिहास्ति निष्क्रियतनोर्मोक्षैकरूपस्य मे ।
निर्द्वैतस्य न हेयमन्यदपि वा नो वाप्युपेयान्तरं
शान्तोऽद्यास्मि विमुक्ततोयविमलो मेघो यथा निर्मलः ॥१०॥

किं नः प्राप्तमितः पुरा किमधुना लब्धं विचारादिना
यस्मात्तत्सुखरूपमेव सततं जाज्वल्यमानोऽस्म्यहम् ।
किं वाऽपेक्ष्यमिहापि मय्यतितरां मिथ्याविचारादिकं
द्वैताद्वैतविवर्जिते समरसे मौनं परं संमतम् ॥११॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

श्रोतव्यं च किमस्ति पूर्णसुदृशो नित्यापरोक्षस्य मे
मन्तव्यं च न मेऽस्ति किंचिदपि वा निःसंशयज्योतिषः ।
ध्यातृध्येयविभेदहानिवपुषो न ध्येयमस्त्येव मे
सर्वात्मैकमहारसस्य सततं नो वा समाधिर्मम ॥१२॥

आत्मानात्मविवेचनाऽपि मम नो विद्वत्कृता रोचते-
ऽनात्मा नास्ति यदस्ति गोचरवपुः को वा विवेक्तुं क्षमी ।
मिथ्यावादविचारचिन्तनमहो कुर्वन्त्यदृष्टात्मका
भ्रान्ता एव न पारगा दृढधियस्तूष्णीं शिलावत्स्थिताः ॥१३॥

वस्तुस्थित्यनुरोधतस्त्वहमहो कश्चित्पदार्थो न चा-
प्येवं कोऽपि विभामि संततदृशिर्वाङ्मानसागोचरः ।
निष्पापोऽस्म्यभयोऽस्म्यहं विगतदुःशङ्काकलङ्कोऽस्म्यहं
संशान्तानुपमानशीतलमहं प्रौढप्रकाशोऽस्म्यहम् ॥१४॥

योऽहं पूर्वमितः प्रशान्तकलनः शुद्धोऽस्मि बुद्धोऽस्म्यहं
यस्मान्मत्त इदं समुत्थितमभूदेतन्मया धार्यते ।
मय्येव प्रलयं प्रयाति निरधिष्ठानाय तस्मै सदा
सत्यानन्दचिदात्मकाय विपुलप्रज्ञाय मह्यं नमः ॥१५॥

सत्ताचित्सुखरूपमस्ति सततं नाहं च न त्वं मृषा
नेदं वापि जगत्प्रदृष्टमखिलं नास्तीति जानीहि भोः ।
यत्प्रोक्तं करुणावशात्त्वयि मया तत्सत्यमेतत्स्फुटं
श्रद्धत्स्वानघ शुद्धबुद्धिरसि चेन्माऽत्रास्तु ते संशयः ॥१६॥

स्वारस्यैकसुबोधचारुमनसे प्रौढानुभूतिस्त्वियं
दातव्या न तु मोहदग्धकुधिये दुष्टान्तरङ्गाय च ।
येयं रम्यविदर्पितोत्तमशिरः प्राप्ता चकास्ति स्वयं
सा चेन्मर्कटहस्तदेशपतिता किं राजते केतकी ॥१७॥

॥ इति प्रौढानुभूतिः ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

# ब्रह्मज्ञानावलीमाला

सकृच्छ्रवणमात्रेण ब्रह्मज्ञानं यतो भवेत् ।
ब्रह्मज्ञानावलीमाला सर्वेषां मोक्षसिद्धये ॥१॥

असङ्गोऽहमसङ्गोऽहमसङ्गोऽहं पुनः पुनः ।
सच्चिदानन्दरूपोऽहमहमेवाहमव्ययः ॥२॥

नित्यशुद्धविमुक्तोऽहं निराकारोऽहमव्ययः ।
भूमानन्दस्वरूपोऽहमहमेवाहमव्ययः ॥३॥

नित्योऽहं निरवद्योऽहं निराकारोऽहमच्युतः ।
परमानन्दरूपोऽहमहमेवाहमव्ययः ॥४॥

शुद्धचैतन्यरूपोऽहमात्मारामोऽहमेव च ।
अखण्डानन्दरूपोऽहमहमेवाहमव्ययः ॥५॥

प्रत्यक्चैतन्यरूपोऽहं शान्तोऽहं प्रकृतेः परः ।
शाश्वतानन्दरूपोऽहमहमेवाहमव्ययः ॥६॥

तत्वातीतः परात्माऽहं मध्यातीतः परः शिवः ।
मायातीतः परंज्योतिरहमेवाहमव्ययः ॥७॥

नानारूपव्यतीतोऽहं चिदाकारोऽहमच्युतः ।
सुखरूपस्वरूपोऽहमहमेवाहमव्ययः ॥८॥

मायातत्कार्यदेहादि मम नास्त्येव सर्वदा ।
स्वप्रकाशैकरूपोऽहमहमेवाहमव्ययः ॥९॥

गुणत्रयव्यतीतोऽहं ब्रह्मादीनां च साक्ष्यहम् ।
अनन्तानन्दरूपोऽहमहमेवाहमव्ययः ॥१०॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अन्तर्यामिस्वरूपोऽहं कूटस्थः सर्वगोऽस्म्यहम् ।
परमात्मस्वरूपोऽहमहमेवाहमव्ययः ॥११॥

निष्कलोऽहं निष्क्रियोऽहं सर्वात्माऽऽद्यः सनातनः ।
अपरोक्षस्वरूपोऽहमहमेवाहमव्ययः ॥१२॥

द्वन्द्वादिसाक्षिरूपोऽहमचलोऽहं सनातनः ।
सर्वसाक्षिस्वरूपोऽहमहमेवाहमव्ययः ॥१३॥

प्रज्ञानघन एवाहं विज्ञानघन एव च ।
अकर्ताऽहमभोक्ताऽहमहमेवाहमव्ययः ॥१४॥

निराधारस्वरूपोऽहं सर्वाधारोऽहमेव च ।
आप्तकामस्वरूपोऽहमहमेवाहमव्ययः ॥१५॥

तापत्रयविनिर्मुक्तो देहत्रयविलक्षणः ।
अवस्थात्रयसाक्ष्यस्मि चाहमेवाहमव्ययः ॥१६॥

दृग्दृश्यौ द्वौ पदार्थौ स्तः परस्परविलक्षणौ ।
दृग्ब्रह्म दृश्यं मायेति सर्ववेदान्तडिण्डिमः ॥१७॥

अहं साक्षीति यो विद्याद्विविच्यैवं पुनः पुनः ।
स एव मुक्तः सन् विद्वानिति वेदान्तडिण्डिमः ॥१८॥

घटकुड्यादिकं सर्वं मृत्तिकामात्रमेव च ।
तद्वद्ब्रह्म जगत्सर्वमिति वेदान्तडिण्डिमः ॥१९॥

ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः ।
अनेन वेद्यं सच्छास्त्रमिति वेदान्तडिण्डिमः ॥२०॥

अन्तर्ज्योतिर्बहिर्ज्योतिः प्रत्यग्ज्योतिः परात्परः ।
ज्योतिर्ज्योतिः स्वयंज्योतिरात्मज्योतिः शिवोऽस्म्यहम् ॥२१॥

॥ इति ब्रह्मज्ञानावलीमाला ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# ब्रह्मानुचिन्तनम्

अहमेव परं ब्रह्म वासुदेवाख्यमव्ययम् ।
इति स्यान्निश्चितो मुक्तो बद्ध एवान्यथा भवेत् ॥१॥

अहमेव परं ब्रह्म निश्चितं चित्त चिन्त्यताम् ।
चिद्रूपत्वादसङ्गत्वादबाध्यत्वात्प्रयत्नतः ॥२॥

अहमेव परं ब्रह्म न चाहं ब्रह्मणः पृथक् ।
इत्येवं समुपासीत ब्राह्मणो ब्रह्मणि स्थितः ॥३॥

सर्वोपाधिविनिर्मुक्तं चैतन्यं च निरन्तरम् ।
तद्ब्रह्माहमिति ज्ञात्वा कथं वर्णाश्रमी भवेत् ॥४॥

अहं ब्रह्मास्मि यो वेद स सर्वं भवति त्विदम् ।
नाभूत्या ईशते देवास्तेषामात्मा भवेद्धि सः ॥५॥

अन्योऽसावहमन्योऽस्मीत्युपास्ते योऽन्यदेवताम् ।
न स वेद नरो ब्रह्म स देवानां यथा पशुः ॥६॥

अहमात्मा न चान्योऽस्मि ब्रह्मैवाहं न शोकभाक् ।
सच्चिदानन्दरूपोऽहं नित्यमुक्तस्वभाववान् ॥७॥

आत्मानं सततं ब्रह्म संभाव्य विहरन्ति ये ।
न तेषां दुष्कृतं किंचिद्दुष्कृतोत्था न चापदः ॥८॥

आत्मानं सततं ब्रह्म संभाव्य विहरेत्सुखम् ।
क्षणं ब्रह्माहमस्मीति यः कुर्यादात्मचिन्तनम् ॥९॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

तन्महापातकं हन्ति तमः सूर्योदयो यथा ।
अज्ञानाद् ब्रह्मणोजातमाकाशं बुद्बुदोपमम् ॥१०॥

आकाशाद्वायुरुत्पन्नो वायोस्तेजस्ततः पयः ।
अद्भ्यश्च पृथिवी जाता ततो व्रीहियवादिकम् ॥११॥

पृथिव्यप्सु पयो वह्नौ वह्निर्वायौ नभस्यसौ ।
नभोऽप्यव्याकृते तच्च शुद्धे शुद्धोऽस्म्यहं हरिः ॥१२॥

अहं विष्णुरहं विष्णुरहं विष्णुरहं हरिः ।
कर्तृभोक्त्रादिकं सर्वं तदविद्योत्थमेव च ॥१३॥

अच्युतोऽहमनन्तोऽहं गोविन्दोऽहमहं हरिः ।
आनन्दोऽहमशेषोऽहमजोऽहममृतोऽस्म्यहम् ॥१४॥

नित्योऽहं निर्विकल्पोऽहं निराकारोऽहमव्ययः ।
सच्चिदानन्दरूपोऽहं पञ्चकोशातिगोऽस्म्यहम् ॥१५॥

अकर्ताऽहमभोक्ताऽहमसङ्गः परमेश्वरः ।
सदा मत्सन्निधानेन चेष्टते सर्वमिन्द्रियम् ॥१६॥

आदिमध्यान्तमुक्तोऽहं न बद्धोऽहं कदाचन ।
स्वभावनिर्मलः शुद्धः स एवाहं न संशयः ॥१७॥

ब्रह्मैवाहं न संसारी मुक्तोऽहमिति भावयेत् ।
अशक्नुवन्भावयितुं वाक्यमेतत्सदाऽभ्यसेत् ॥१८॥

यदभ्यासेन तद्भावो भवेद्भ्रमरकीटवत् ।
अत्रापहाय सन्देहमभ्यसेत्कृतनिश्चयः ॥१९॥

ध्यानयोगेन मासैकाद्ब्रह्महत्यां व्यपोहति ।
संवत्सरं सदाऽभ्यासात्सिद्ध्यष्टकमवाप्नुयात् ॥२०॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

यावज्जीवं सदाऽभ्यासाज्जीवन्मुक्तो भवेद्यतिः ।
नाहं देहो न च प्राणो नेन्द्रियाणि तथैव च ॥२१॥

न मनोऽहं न बुद्धिश्च नैव चित्तमहंकृतिः ।
नाहं पृथ्वी न सलिलं न च वह्निस्तथाऽनिलः ॥२२॥

न चाकाशो न शब्दश्च न च स्पर्शस्तथा रसः ।
नाहं गन्धो न रूपं च न मायाऽहं न संसृतिः ॥२३॥

सदा साक्षिस्वरूपत्वाच्छिव एवास्मि केवलः ।
मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् ॥२४॥

मयि सर्वं लयं याति तद्ब्रह्मास्म्यहमद्वयम् ।
सर्वज्ञोऽहमनन्तोऽहं सर्वेशः सर्वशक्तिमान् ॥२५॥

आनन्दः सर्वबोधोऽहमिति ब्रह्मानुचिन्तनम् ।
अयं प्रपञ्चो मिथ्यैव सत्यं ब्रह्माहमव्ययम् ॥२६॥

अत्र प्रमाणं वेदान्ता गुरवोऽनुभवस्तथा ।
ब्रह्मैवाहं न संसारी न चाहं ब्रह्मणः पृथक् ॥२७॥

नाहं देहो न मे देहः केवलोऽहं सनातनः ।
एवमेवाद्वितीयं वै ब्रह्मणो नेह किंचन ॥२८॥

हृदयकमलमध्ये दीपवद्वेदसारं
प्रणवमयमतर्क्यं योगिभिर्ध्यानिगम्यम् ।
हरिगुरुशिवयोगं सर्वभूतस्थमेकं
सकृदपि मनसा वै चिन्तयेद्यः स मुक्तः ॥२९॥

॥ इति ब्रह्मानुचिन्तनम् ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

# सदाचारानुसंधानम्

सच्चिदानन्दकन्दाय जगदङ्कुरहेतवे ।
सदोदिताय पूर्णाय नमोऽनन्ताय विष्णवे ॥१॥

सर्ववेदान्तसिद्धान्तैर्ग्रंथितं निर्मलं शिवम् ।
सदाचारं प्रवक्ष्यामि योगिनां ज्ञानसिद्धये ॥२॥

प्रातः स्मरामि देवस्य सवितुर्भर्गं आत्मनः ।
वरेण्यं तद्धियो यो नश्चिदानन्दे प्रचोदयात् ॥३॥

अन्वयव्यतिरेकाभ्यां जाग्रत्स्वप्नसुषुप्तिषु ।
यदेकं केवलं ज्ञानं तदेवास्मि परं बृहत् ॥४॥

ज्ञानाज्ञानविलासोऽयं ज्ञानाज्ज्ञाने च शाम्यति ।
ज्ञानाज्ञाने परित्यज्य ज्ञानमेवावशिष्यते ॥५॥

अत्यन्तमलिनो देहो देही चात्यन्तनिर्मलः ।
असङ्गोऽहमिति ज्ञात्वा शौचमेतत्प्रचक्षते ॥६॥

मन्मनो मीनवन्नित्यं क्रीडत्यानन्दवारिधौ ।
सुस्नातस्तेन पूतात्मा सम्यग्विज्ञानवारिणा ॥७॥

अथाघमर्षणं कुर्यात्प्राणापाननिरोधतः ।
मनः पूर्णे समाधाय मग्नकुम्भो यथाऽर्णवे ॥८॥

लयविक्षेपयो सन्धौ मनस्तत्र निरामिषम् ।
स सन्धिः साधितो येन स मुक्तो नात्र संशयः ॥९॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सर्वत्र प्राणिनां देहे जपो भवति सर्वदा ।
हंसः सोऽहमिति ज्ञात्वा सर्वबन्धैर्विमुच्यते ॥१०॥

तर्पणं स्वसुखेनैव स्वेन्द्रियाणां प्रतर्पणम् ।
मनसा मन आलोक्य स्वयमात्मा प्रकाशते ॥११॥

आत्मनि स्वप्रकाशाग्नौ चित्तमेकाहुतिं क्षिपेत् ।
अग्निहोत्री स विज्ञेयश्चेतरे नामधारकाः ॥१२॥

देहो देवालयः प्रोक्तो देही देवो निरञ्जनः ।
अर्चितः सर्वभावेन स्वानुभूत्या विराजते ॥१३॥

मौनं स्वाध्ययनं ध्यानं ध्येयब्रह्मानुचिन्तनम् ।
ज्ञानेनेति तयोः सम्यङ्निषेधात्तत्त्वदर्शनम् ॥१४॥

अतीतानागतं किञ्चिन्न स्मरामि न चिन्तये ।
रागद्वेषौ विना प्राप्तं भुञ्जाम्यत्र शुभाशुभम् ॥१५॥

देहाभ्यासो हि संन्यासो नैव काषायवाससा ।
नाहं देहोऽहमात्मेति निश्चयो न्यासलक्षणम् ॥१६॥

अभयं सर्वभूतानां दानमाहुर्मनीषिणः ।
निजानन्दे स्पृहा नान्ये वैराग्यस्यावधिर्मता ॥१७॥

वेदान्तश्रवणं कुर्यान्मननं चोपपत्तिभिः ।
योगेनाभ्यसनं नित्यं ततो दर्शनमात्मनः ॥१८॥

शब्दशक्तेरचिन्त्यत्वाच्छब्दादेवापरोक्षधीः ।
प्रसुप्तः पुरुषो यद्वच्छब्देनैवावबुद्धयते ॥१९॥

आत्मानात्मविवेकेन ज्ञानं भवति निश्चलम् ।
गुरुणा बोधितः शिष्यः शब्दब्रह्मातिवर्तते ॥२०॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

न त्वं देहो नेन्द्रियाणि न प्राणो न मनो न धीः ।
विकारित्वाद्विनाशित्वाद् दृश्यत्वाच्च घटो यथा ॥२१॥

विशुद्धं केवलं ज्ञानं निर्विशेषं निरञ्जनम् ।
यदेकं परमानन्दं तत्त्वमस्यद्वयं परम् ॥२२॥

शब्दस्याद्यन्तयो सिद्धं मनसोऽपि तथैव च ।
मध्ये साक्षितया नित्यं तदेव त्वं भ्रमं जहि ॥२३॥

स्थूलवैराजयोरैक्यं सूक्ष्महैरण्यगर्भयोः ।
अज्ञानमाययोरैक्यं प्रत्यग्विज्ञानपूर्णयोः ॥२४॥

चिन्मात्रैकरसे विष्णौ ब्रह्मात्मैक्यस्वरूपके ।
भ्रमेणैव जगज्जातं रज्ज्वां सर्पभ्रमो यथा ॥२५॥

तार्किकाणां तु जीवेशौ वाच्यावेतौ विदुर्बुधाः ।
लक्ष्यौ च सांख्ययोगाभ्यां वेदान्तैरेकता तयोः ॥२६॥

कार्यकारणवाच्यांशौ जीवेशौ यौ जहच्च तौ ।
अजहच्च तयोर्लक्ष्यौ चिदंशावेकरूपिणौ ॥२७॥

कर्मशास्त्रे कुतो ज्ञानं तर्के नैवास्ति निश्चयः ।
सांख्ययोगौ भिदापन्नौ शाब्दिकाः शब्दतत्पराः ॥२८॥

अन्ये पाषण्डिनः सर्वे ज्ञानवार्तासुदुर्लभाः ।
एकं वेदान्तविज्ञानं स्वानुभूत्या विराजते ॥२९॥

अहं ममेत्ययं बन्धो ममाहं नेति मुक्तता ।
बन्धमोक्षौ गुणैर्भाति गुणाः प्रकृतिसंभवाः ॥३०॥

ज्ञानमेकं सदा भाति सर्वावस्थासु निर्मलम् ।
मन्दभाग्या न जानन्ति स्वरूपं केवलं बृहत् ॥३१॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

संकल्पसाक्षि यज्ज्ञानं सर्वलोकैकजीवनम् ।
तदेवास्मीति यो वेद स मुक्तो नात्र संशयः ॥३२॥

प्रमाता च प्रमाणं च प्रमेयं प्रमितिस्तथा ।
यस्य भासाऽवभासन्ते मानं भासाय तस्य किम् ॥३३॥

अर्थाकारा भवेद्वृत्तिः फलेनार्थः प्रकाशते ।
अर्थज्ञानं विजानाति स एवार्थः प्रकाशते ॥३४॥

वृत्तिव्याप्यत्वमेवास्तु फलव्याप्तिः कथं भवेत् ।
स्वप्रकाशस्वरूपत्वात्सिद्धत्वाच्च चिदात्मनः ॥३५॥

चित्तं चैतन्यमात्रेण संयोगाच्चेतना भवेत् ।
अर्थादर्थान्तरे वृत्तिर्गन्तुं चलति चान्तरे ॥३६॥

निराधारा निर्विकारा या दशा सोन्मनी स्मृता ।
चित्तं चिदिति जानीयात्तकाररहितं यदा ॥३७॥

तकारो विषयाध्यासो जपारागो यथा मणौ ।
ज्ञेयवस्तुपरित्यागाज्ज्ञानं तिष्ठति केवलम् ॥३८॥

त्रिपुटी क्षीणतामेति ब्रह्मनिर्वाणमृच्छति ।
मनोमात्रमिदं सर्वं तन्मनो ज्ञानमात्रकम् ॥३९॥

अज्ञानं भ्रम इत्याहुर्विज्ञानं परमं पदम् ।
अज्ञानं चान्यथाज्ञानं मायामेतां वदन्ति ते ॥४०॥

ईश्वरं मायिनं विद्यान्मायातीतं निरञ्जनम् ।
सदानन्दे चिदाकाशे माया मेघस्तटिन्मतः ॥४१॥

अहंता गर्जनं तत्र धारासारा हि वृत्तयः ।
महामोहान्धकारेऽस्मिन्देवो वर्षति लीलया ॥४२॥

तस्या वृष्टेर्विरामाय प्रबोधैकसमीरणः ।
ज्ञानं दृग्दृश्ययोर्भानं विज्ञानं दृश्यशून्यता ॥४३॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

एकमेवाद्वयं ब्रह्म नेह नानाऽस्ति किंचन ।
क्षेत्रक्षेत्रज्ञयोर्ज्ञानं तज्ज्ञानं ज्ञानमुच्यते ॥४४॥

विज्ञानं चोभयोरैक्यं क्षेत्रज्ञपरमात्मनोः ।
परोक्षं शास्त्रजं ज्ञानं विज्ञानं चात्मदर्शनम् ॥४५॥

आत्मनो ब्रह्मणः सम्यगुपाधिद्वयवर्जितम् ।
त्वमर्थविषयं ज्ञानं विज्ञानं तत्पदाश्रयम् ॥४६॥

पादयोरैक्यबोधस्तु ज्ञानविज्ञानसंज्ञितम् ।
आत्मानात्मविवेकं च ज्ञानमाहुर्मनीषिणः ॥४७॥

अज्ञानं चान्यथा लोके विज्ञानं तन्मयं जगत् ।
अन्वयव्यतिरेकाभ्यां सर्वत्रैकं प्रपश्यति ॥४८॥

यत्तु वृत्तिजं ज्ञानं विज्ञानं ज्ञानमात्रकम् ।
अज्ञानध्वंसकं ज्ञानं विज्ञानं चोभयात्मकम् ॥४९॥

ज्ञानविज्ञाननिष्ठोऽयं तत्सद्ब्रह्मणि चार्पणम् ।
भोक्ता सत्त्वगुणः शुद्धो भोगानां साधनं रजः ॥५०॥

भोग्यं तमोगुणः प्राहुरात्मा चैषां प्रकाशकः ।
ब्रह्माध्ययनसंयुक्तो ब्रह्मचर्यारतः सदा ॥५१॥

सर्वं ब्रह्मेति यो वेद ब्रह्मचारी च उच्यते ।
गृहस्थो गुणमध्यस्थः शरीरं गृहमुच्यते ॥५२॥

गुणाः कुर्वन्ति कर्माणि नाहंकर्तेति बुद्धिमान् ।
किमुग्रैश्च तपोभिः स्यात् यस्य ज्ञानमयं तपः ॥५३॥

हर्षामर्षविनिर्मुक्तो वानप्रस्थः स उच्यते ।
स गृही यो गृहातीतः शरीरं गृहमुच्यते ॥५४॥

सदाचारमिमं नित्यं योऽनुसंदधते बुधः ।
संसारसागराच्छीघ्रं स मुक्तो नात्र संशयः ॥५५॥

॥ इति सदाचारानुसन्धानम् ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# श्रीदक्षिणामूर्तिस्तोत्रम् (२)

विश्वं दर्पणदृश्यमाननगरीतुल्यं निजान्तर्गतं
पश्यन्नात्मनि मायया बहिरिवोद्भूतं यथा निद्रया ।
यः साक्षात्कुरुते प्रबोधसमये स्वात्मानमेवाद्वयं
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥१॥

बीजस्यान्तरिवांकुरो जगदिदं प्राङ्निर्विकल्पं पुन-
र्मायाकल्पितदेशकालकलनावैचित्र्यचित्रीकृतम् ।
मायावीव विजृंभयत्यपि महायोगीव यः स्वेच्छया
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥२॥

यस्यैव स्फुरणं सदात्मकमसत्कल्पार्थकं भासते
साक्षात्तत्त्वमसीति वेदवचसा यो बोधयत्याश्रितान् ।
यत्साक्षात्करणाद्भवेन्न पुनरावृत्तिर्भवांभोनिधौ
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥३॥

नानाच्छिद्रघटोदरस्थितमहादीपप्रभाभास्वरं
ज्ञानं यस्य तु चक्षुरादिकरणद्वारा बहिः स्पन्दते ।
जानामीति तमेव भान्तमनुभात्येतत्समस्तं जग-
त्तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥४॥

देहं प्राणमपीन्द्रियाण्यपि चलां बुद्धिं च शून्यं विदुः
स्त्रीबालान्धजडोपमास्त्वहमिति भ्रान्ता भृशं वादिनः ।
मायाशक्तिविलासकल्पितमहाव्यामोहसंहारिणे
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥५॥

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

राहुग्रस्तदिवाकरेन्दुसदृशो मायासमाच्छादनात्
सन्मात्रः करणोपसंहरणतो योऽभूत्सुषुप्तः पुमान् ।
प्रागस्वाप्समिति प्रबोधसमये यः प्रत्यभिज्ञायते
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥६॥

बाल्यादिष्वपि जाग्रदादिषु तथा सर्वास्ववस्थास्वपि
व्यावृत्तास्वनुवर्तमानमहमित्यन्तः स्फुरन्तं सदा ।
स्वात्मानं प्रकटीकरोति भजतां यो भद्रया मुद्रया
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥७॥

विश्वं पश्यति कार्यकारणतया स्वस्वामिसम्बन्धतः
शिष्याचार्यतया तथैव पितृपुत्राद्यात्मना भेदतः ।
स्वप्ने जाग्रति वा य एष पुरुषो मायापरिभ्रामित-
स्तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥८॥

भूरंभांस्यनलोऽनिलोऽम्बरमहर्नाथो हिमांशुः पुमा-
नित्याभाति चराचरात्मकमिदं यस्यैव मूर्त्यष्टकम् ।
नान्यत् किंचन विद्यते विमृशतां यस्मात्परस्माद्विभो-
स्तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥९॥

सर्वात्मत्वमिति स्फुटीकृतमिदं यस्मादमुष्मिन् स्तवे
तेनास्य श्रवणात्तथार्थमननाद्ध्यानाच्च संकीर्तनात् ।
सर्वात्मत्वमहाविभूतिसहितं स्यादीश्वरत्वं स्वतः
सिद्ध्येत्तत्पुनरष्टधा परिणतं चैश्वर्यमव्याहतम् ॥१०॥

॥ इति श्रीमच्छङ्करभगवत्पादकृतं श्रीदक्षिणामूर्तिस्तोत्रम् ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# कौपीनपञ्चकम्

वेदान्तवाक्येषु सदा रमन्तो भिक्षान्नमात्रेण च तुष्टिमन्तः ।
विशोकवन्तः करुणैकवन्तः कौपीनवन्तः खलु भाग्यवन्तः ॥१॥

मूलं तरोः केवलमाश्रयन्तः पाणिद्वयं भोक्तुममंत्रयन्तः ।
कन्थामिव श्रीमपि कुत्सयन्तः कौपीनवन्तः खलु भाग्यवन्तः ॥२॥

देहादिभावं परिमार्जयन्त आत्मानमात्मन्यवलोकयन्वः ।
नान्तं न मध्यं न बहिः स्मरन्तः कौपीनवन्तः खलु भाग्यवन्तः ॥३॥

स्वानन्दभावे परितुष्टिमन्तः संशान्तसर्वेन्द्रियदृष्टिमन्तः ।
अहर्निशं ब्रह्मणि ये रमन्तः कौपीनवन्तः खलु भाग्यवन्तः ॥४॥

पञ्चाक्षरं पावनमुच्चरन्तः पतिं पशूनां हृदि भावयन्तः ।
भिक्षाशना दिक्षु परिभ्रमन्तः कौपीनवन्तः खलु भाग्यवन्तः ॥५॥

॥ इति कौपीनपञ्चकम् ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

# मायापञ्चकम्

निरुपमनित्यनिरंशकेऽप्यखण्डे मयि चिति सर्वविकल्पनादिशून्ये ।
घटयति जगदीशजीवभेदं त्वघटितघटनापटीयसी माया ॥१॥

श्रुतिशतनिगमान्तशोधकानप्यहह धनादिनिदर्शनेन सद्यः ।
कलुषयति चतुष्पदाद्यभिन्नानघटितघटनापटीयसी माया ॥२॥

सुखचिदखण्डविबोधमद्वितीयं वियदनलादिविनिर्मिते नियोज्य ।
भ्रमयति भवसागरे नितान्तं त्वघटितघटनापटीयसी माया ॥३॥

अपगतगुणवर्णजातिभेदे सुखचिति विप्रविडाद्यहंकृतिं च ।
स्फुटयति सुतदारगेहमोहं त्वघटितघटनापटीयसी माया ॥४॥

विधिहरिहरभेदमप्यखण्डे वत विरचय्य बुधानपि प्रकामम् ।
भ्रमयति हरिहरविभेदभावानघटितघटनापटीयसी माया ॥५॥

॥ इति मायापञ्चकम् ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# वैराग्यपञ्चकम्

शिलं किमनलं भवेदनलमौदरं बाधितुं
पयः प्रसृतिपूरकं किमु न धारकं सारसम् ।
अयत्नमलमल्पकं पथि पटच्चरं कच्चरं
भजन्ति विबुधा मुधा अहह कुक्षितः कुक्षितः ॥१॥

दुरीश्वरद्वारबहिर्वितर्दिकादुरासिकायै रचितोऽयमञ्जलिः ।
यदञ्जनाभं निरपायमस्ति नो धनञ्जयस्यन्दनभूषणं धनम् ॥२॥

काचाय नीचं कमनीयवाचा मोचाफलस्वादमुचा न याचे ।
दयाकुचेले धनदत्कुचेले स्थितेऽकुचेले श्रितमाकुचेले ॥३॥

क्षोणीकोणशतांशपालनखलद्दुर्वारगर्वानल-
क्षुभ्यत्क्षुद्रनरेन्द्रचाटुरचनां धन्यां न मन्यामहे ।
देवं सेवितुमेव निश्चिनुमहे योऽसौ दयालुः पुरा
धानामुष्टिमुचे कुचेलमुनये धत्ते स्म वित्तेशताम् ॥४॥

शरीरपतनावधिप्रभुनिषेवणापादना-
दविन्धनधनञ्जयप्रशमदं धनं दन्धनम् ।
धनञ्जयविवर्धनं धनमुदूढगोवर्धनं
सुसाधनमबाधनं सुमनसां समाराधनम् ॥५॥

॥ इति वैराग्यपञ्चकम् ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# द्वादशपञ्जरिकास्तोत्रम्

मूढ जहीहि धनागमतृष्णां कुरु सद्बुद्धिं मनसि वितृष्णाम् ।
यल्लभसे निजकर्मोपात्तं वित्तं तेन विनोदय चित्तम् ॥१॥

अर्थमनर्थं भावय नित्यं नास्ति ततः सुखलेशः सत्यम् ।
पुत्रादपि धनभाजां भीतिः सर्वत्रैषा विहिता रीतिः ॥२॥

का ते कान्ता कस्ते पुत्रः संसारोऽयमतीव विचित्रः ।
कस्य त्वं कः कुत आयातस्तत्त्वं चिन्तय यदिदं भ्रातः ॥३॥

मा कुरु धनजनयौवनगर्वं हरति निमेषात्कालः सर्वम् ।
मायामयमिदमखिलं हित्वा ब्रह्मपदं त्वं प्रविश विदित्वा ॥४॥

कामं क्रोधं लोभं मोहं त्यक्त्वात्मानं भावय कोऽहम् ।
आत्मज्ञानविहीना मूढास्ते पच्यन्ते नरकनिगूढाः ॥५॥

सुरमन्दिरतरुमूलनिवासः शय्या भूतलमजिनं वासः ।
सर्वपरिग्रहभोगत्यागः कस्य सुखं न करोति विरागः ॥६॥

शत्रौ मित्रे पुत्रे बन्धौ मा कुरु यत्नं विग्रहसन्धौ ।
भव समचित्तः सर्वत्र त्वं वाञ्छस्यचिराद्यदि विष्णुत्वम् ॥७॥

त्वयि मयि चान्यत्रैको विष्णुर्व्यर्थं कुप्यसि मय्यसहिष्णुः ।
सर्वस्मिन्नपि पश्यात्मानं सर्वत्रोत्सृज भेदज्ञानम् ॥८॥

प्राणायामं प्रत्याहारं नित्यानित्यविवेकविचारम् ।
जाप्यसमेतसमाधिविधानं कुर्ववधानं महदवधानम् ॥९॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

नलिनीदलगतसलिलं तरलं तद्वज्जीवितमतिशयचपलम् ।
विद्धि व्याध्यभिमानग्रस्तं लोकं शोकहतं च समस्तम् ॥१०॥

का तेऽष्टादशदेशे चिन्ता वातुल तव किं नास्ति नियन्ता ।
यस्त्वां हस्ते सुदृढनिबद्धं बोधयति प्रभवादिविरुद्धम् ॥११॥

गुरुचरणाम्बुजनिर्भरभक्तः संसारादचिराद्भव मुक्तः ।
सेन्द्रियमानसनियमादेवं द्रक्ष्यसि निजहृदयस्थं देवम् ॥१२॥

द्वादशपञ्जरिकामय एषः शिष्याणां कथितो ह्युपदेशः ।
येषां चित्ते नैव विवेकस्ते पच्यन्ते नरकमनेकम् ॥१३॥

सत्सङ्गत्वे निःसङ्गत्वं निःसङ्गत्वे निर्मोहत्वम् ।
निर्मोहत्वे निश्चलितत्वं निश्चलितत्वे जीवन्मुक्तिः ॥१४॥

॥ इति श्रीमच्छङ्करभगवत्पादकृतम् द्वादशपञ्जरिकास्तोत्रम् ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# एकश्लोकी

किं ज्योतिस्तव भानुमानहनि मे रात्रौ प्रदीपादिकं
स्यादेवं रविदीपदर्शनविधौ किं ज्योतिराख्याहि मे।
चक्षुस्तस्य निमीलनादिसमये किं धीर्धियो दर्शने
किं तत्राहमतो भवान्परमकं ज्योतिस्तदस्मि प्रभो॥

॥ इति एकश्लोकी ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# चर्पटपञ्जरिकास्तोत्रम्

भज गोविन्दं भज गोविन्दं गोविन्दं भज मूढमते
प्राप्ते संनिहिते मरणे न हि न हि रक्षति 'डुकृञ् करणे'।।

दिनमपि रजनी सायं प्रातः शिशिरवसन्तो पुनरायातः।
कालः क्रीडति गच्छत्यायुः तदपि न मुञ्चत्याशावायुः ।।१।।

अग्रे वह्निः पृष्ठे भानू रात्रौ चुबुकसमर्पितजानुः।
करतलभिक्षा तरुतलवासः तदपि न मुञ्चत्याशापाशः ।।२।।

यावद्वित्तोपार्जनसक्तः तावन्निजपरिवारो रक्तः।
पश्चाद्धावति जर्जरदेहे वार्तां पृच्छति कोऽपि न गेहे ।।३।।

जटिलो मुण्डी लुञ्चितकेशः काषायाम्बरबहुकृतवेषः।
पश्यन्नपि च न पश्यति मूढ उदरनिमित्तं बहुकृतवेषः ।।४।।

भगवद्गीता किंचिदधीता गङ्गाजललवकणिका पीता।
सकृदपि यस्य मुरारिसमर्चा तस्य यमः किं कुरुते चर्चाम् ।।५।।

अङ्गं गलितं पलितं मुण्डं दशनविहीनं जातं तुण्डम्।
वृद्धो याति गृहीत्वा दण्डं तदपि न मुञ्चत्याशापिण्डम् ।।६।।

बालस्तावत्क्रीडासक्तः तरुणस्तावत्तरुणीरक्तः।
वृद्धस्तावच्चिन्तामग्नः परमे ब्रह्मणि कोऽपि न लग्नः ।।७।।

पुनरपि जननं पुनरपि मरणं पुनरपि जननीजठरे शयनम्।
इह संसारे बहुदुस्तारे कृपयापारे पाहि मुरारे ।।८।।

पुनरपि रजनी पुनरपि दिवसः पुनरपि पक्षः पुनरपि मासः।
पुनरप्ययनं पुनरपि वर्षं तदपि न मुञ्चत्याशामर्षम् ।।९।।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

वयसि गते कः कामविकारः शुष्के नीरे कः कासारः ।
नष्टे द्रव्ये कः परिवारो ज्ञाते तत्त्वे कः संसारः ॥१०॥

नारीस्तनभरनाभिनिवेशं मिथ्यामायामोहावेशम् ।
एतन्मांसवसादिविकारं मनसि विचिन्तय वारं वारम् ॥११॥

कस्त्वं कोऽहं कुत आयातः का मे जननी को मे तातः ।
इति परिभावय सर्वमसारं विश्वं त्यक्त्वा स्वप्नविचारम् ॥१२॥

गेयं गीतानामसहस्रं ध्येयं श्रीपतिरूपमजस्रम् ।
नेयं सज्जनसङ्गे चित्तं देयं दीनजनाय च वित्तम् ॥१३॥

यावज्जीवो निवसति देहे कुशलं तावत्पृच्छति गेहे ।
गतवति वायौ देहापाये भार्या बिभ्यति तस्मिन्काये ॥१४॥

सुखतः क्रियते रामाभोगः पश्चाद्धन्त शरीरे रोगः ।
यद्यपि लोके मरणं शरणं तदपि न मुञ्चति पापाचरणम् ॥१५॥

रथ्याकर्पटविरचितकन्थः पुण्यापुण्यविवर्जितपन्थः ।
नाहं न त्वं नायं लोकस्तदपि किमर्थं क्रियते शोकः ॥१६॥

कुरुते गङ्गासागरगमनं व्रतपरिपालनमथवा दानम् ।
ज्ञानविहीनः सर्वमनेन मुक्तिर्भवति न जन्मशतेन ॥१७॥

॥ इति श्रीमच्छङ्करभगवत्पादकृतं चर्पटपञ्जरिकास्तोत्रम् ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

# स्वरूपानुसन्धानाष्टकम्

तपोयज्ञदानादिभिः शुद्धबुद्धिर्विरक्तो नृपादेः पदे तुच्छबुद्ध्या ।
परित्यज्य सर्वं यदाप्नोति तत्त्वं परं ब्रह्म नित्यं तदेवाहमस्मि ॥१॥

दयालुं गुरुं ब्रह्मनिष्ठं प्रशान्तं समाराध्य भक्त्या विचार्य स्वरूपम् ।
यदाप्नोति तत्त्वं निदिध्यास्य विद्वान् परं ब्रह्म नित्यं तदेवाहमस्मि ॥२॥

यदानन्दरूपं प्रकाशस्वरूपं निरस्तप्रपञ्चं परिच्छेदहीनम् ।
अहं ब्रह्मवृत्त्येकगम्यं तुरीयं परं ब्रह्म नित्यं तदेवाहमस्मि ॥३॥

यदज्ञानतो भाति विश्वं समस्तं विनष्टं च सद्यो यदात्मप्रबोधे ।
मनोवागतीतं विशुद्धं विमुक्तं परं ब्रह्म नित्यं तदेवाहमस्मि ॥४॥

निषेधे कृते नेति नेतीति वाक्यैः समाधिस्थितानां यदाभाति पूर्णम् ।
अवस्थात्रयातीतमद्वैतमेकं परं ब्रह्म नित्यं तदेवाहमस्मि ॥५॥

यदानन्दलेशैः समानन्दि विश्वं यदाभाति सत्त्वे तदाभाति सर्वम् ।
यदालोचिते हेयमन्यत्समस्तं परं ब्रह्म नित्यं तदेवाहमस्मि ॥६॥

अनन्तं विभुं सर्वयोनिं निरीहं शिवं सङ्गहीनं यदोङ्कारगम्यम् ।
निराकारमत्युज्ज्वलं मृत्युहीनं परं ब्रह्म नित्यं तदेवाहमस्मि ॥७॥

यदानन्दसिन्धौ निमग्नः पुमान्स्यादविद्याविलासः समस्तप्रपञ्चः ।
तदा न स्फुरत्यद्भुतं यन्निमित्तं परं ब्रह्म नित्यं तदेवाहमस्मि ॥८॥

स्वरूपानुसन्धानरूपां स्तुतिं यः पठेदादराद्भक्तिभावो मनुष्यः ।
शृणोतीह वा नित्यमुद्युक्तचित्तो भवेद्विष्णुरत्रैव वेदप्रमाणात् ॥९॥

॥ इति स्वरूपानुसन्धानाष्टकम् ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

# शिवपञ्चाक्षरीनक्षत्रमालिकास्तोत्र

श्रीमदात्मनेगुणैकसिन्धवे नमश्शिवाय धामलेशधूतलोकबन्धवे नमश्शिवाय। वामशोषितानमङ्गवान्धवे नमश्शिवाय पामरेतरप्रधानबन्धवे नमश्शिवाय ॥१॥ कालभीतविप्रबालपाल ते नमश्शिवाय शूलभिन्नदुष्टरक्षफाल ते नमश्शिवाय। मूलकारणीयकालकाल ते नमःशिवाय पालयाधुना दयालवाल ते नमश्शिवाय ॥२॥ इष्टवस्तु मुख्यदानहेतवे नमश्शिवाय दुष्टदैत्यवंशधूमकेतवे नमश्शिवाय। सृष्टि रक्षणायधर्मसेतवे नमश्शिवाय अष्टमूर्तये वृषेन्द्रकेतवे नमश्शिवाय ॥३॥ आपदद्रिभेदटङ्कहस्त ते नमश्शिवाय पापहारिदिव्यसिन्धुमस्त ते नमश्शिवाय। पापदारिणेलसन्नमस्त ते नमश्शिवाय शापदोषखण्डनप्रसक्त ते नमश्शिवाय ॥४॥ व्योमकेशदिव्यभव्यरूप ते नमश्शिवाय हेममेदिनीधरेन्द्रचाप ते नमश्शिवाय। नाममात्रदग्धसर्वपाप ते नमश्शिवाय कामितैकतानहृद्दुराप ते नमश्शिवाय ॥५॥ ब्रह्ममस्तकावलीविबद्ध ते नमश्शिवाय जिह्मगेन्द्रकुण्डलप्रसिद्ध ते नमश्शिवाय ब्रह्मणे प्रणीतवेदपद्धते नमश्शिवाय जिह्मकालदेहदत्तपद्धते नमश्शिवाय ॥६॥ कामनाशनायशुद्धकर्मणे नमश्शिवाय सामगानजायमानशर्मणे नमश्शिवाय। हेमकान्तिचाकचक्यवर्मणे नमश्शिवाय सामजासुराङ्गलब्धचर्मणे नमश्शिवाय ॥७॥ जन्ममृत्युघोरदुःखहारिणे नमश्शिवाय चिन्मयैकरूपदेहधारिणे नमश्शिवाय। मन्मनोरथावपूर्तिकारिणे नमश्शिवाय मन्मनोगतायकामवैरिणे नमश्शिवाय ॥८॥ यक्षराजबन्धवे दयालवे नमश्शिवाय रक्षपाणिशोभिकाञ्चनालवे नमश्शिवाय। पक्षिराजवाहहृच्छयालवे नमश्शिवाय अक्षिवालवेदपूततालवे नमश्शिवाय ॥९॥ दक्षहस्तनिष्ठजातवेदसे नमश्शिवाय अक्षरात्मने नमद्बिडौजसे नमश्शिवाय। दीक्षितप्रकाशितात्मतेजसे

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

नमश्शिवाय उक्षराजवाह ते सतांगते नमश्शिवाय ॥१०॥ राजताचलेन्द्रसानुवासिने नमश्शिवाय राजमाननित्यमन्दहासिने नमश्शिवाय । राजराजसख्यकृद्विलासिने नमश्शिवाय राजमानकोरकावतंसिने नमश्शिवाय ॥११॥ दीनमानवालिकामधेनवे नमश्शिवाय सूनबाणदाहकृत्कृशानवे नमश्शिवाय । स्वानुरागभक्तरत्नसानवे नमश्शिवाय दानवान्धकारच ्डभानवे नमश्शिवाय ॥१२॥ सर्वमङ्गलाकुचाग्रशायिने नमश्शिवाय सर्वदेवतागणातिशायिने नमश्शिवाय । पूर्वदेवनाशसंविधायिने नमश्शिवाय सर्वसन्मदौघभङ्गदायिने नमश्शिवाय ॥१३॥ स्तोत्रभक्तितोऽपि भक्तपोषिणे नमश्शिवाय माकरन्दसारवर्षिभाषिणे नमश्शिवाय । एकबिल्वदानतोऽपितोषिणे नमश्शिवाय नैकजन्मपापजालशोषिणे नमश्शिवाय ॥१४॥ सर्वजीवरक्षणैकशीलिने नमश्शिवाय पार्वतीप्रियाय भक्तपालिने नमश्शिवाय । दुर्विदग्धदैत्यसैन्यदारिणे नमश्शिवाय शर्वरीशधारिणे कपालिने नमश्शिवाय ॥१५॥ पाहिमामुमामनोज्ञदेह ते नमश्शिवाय देहि मे वरं सिताद्रिगेह ते नमश्शिवाय । मोहितर्षिकामिनीसमूह ते नमश्शिवाय स्वेहितप्रसन्नकामदोह ते नमश्शिवाय ॥१६॥ मङ्गलप्रदायगोतुरङ्ग ते नमश्शिवाय गङ्गयातरङ्गितोत्तमाङ्ग ते नमश्शिवाय । सङ्गरप्रवृत्तवैरिभङ्ग ते नमश्शिवाय अङ्गजारयेकरेकुरङ्ग ते नमश्शिवाय ॥१७॥ ईहितक्षणप्रदानहेतवे नमश्शिवाय गूहिताग्निपाल उक्षकेतवे नमश्शिवाय । देहकान्तिधूतरौप्यधातवे नमश्शिवाय गेहदुःखपुञ्जधूमकेतवे नमश्शिवाय ॥१८॥ त्र्यक्षदीनसत्कृपाकटाक्ष ते नमश्शिवाय दक्षसप्ततन्तुनाशदक्ष ते नमश्शिवाय । ऋक्षराजभानुपावकाक्ष ते नमश्शिवाय रक्ष मां प्रसन्नमात्ररक्ष ते नमश्शिवाय ॥१९॥ न्यंकुपाणये शिवङ्कराय ते नमश्शिवाय सङ्कटाब्धितीर्णकिङ्कराय ते नमश्शिवाय । पङ्कभीषिताभयङ्कराय ते नमश्शिवाय पङ्कजाननाय शङ्कराय ते नमश्शिवाय ॥२०॥ कर्मपाशनाशनीलकण्ठ ते नमश्शिवाय शर्मदायवर्य भस्मकण्ठ ते नमश्शिवाय । निर्ममर्षिसेवितोपकण्ठ ते नमश्शिवाय कुर्महे-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

नतोनंमद्विकुण्ठ ते नमश्शिवाय ॥२१॥ विष्टपाधिनायनप्रविष्णवे नमश्शिवाय शिष्टविप्रहृद्गुहाचरिष्णवे नमश्शिवाय। इष्टवस्तुदाननित्य तुष्टये नमश्शिवाय कष्टनाशनाय लोकजिष्णवे नमश्शिवाय ॥२२॥ अप्रमेयदिव्यसुप्रभाव ते नमश्शिवाय सत्प्रपन्नरक्षणस्वभाव ते नमश्शिवाय। स्वप्रकाशनिस्तुलानुभाव ते नमश्शिवाय विप्रडिम्भदर्शिताद्रं-भावते नमश्शिवाय ॥२३॥ सेवतायमेमृडप्रसाद ते नमश्शिवाय भावलभ्यतावकप्रसीद ते नमश्शिवाय। पावकाक्षदेवपूज्यपाद ते नमश्शिवाय तावकाङ्घ्रिभक्तदत्तमोद ते नमश्शिवाय ॥२४॥ भुक्तिमुक्तिदिव्यदायभागिने नमश्शिवाय शक्तिकल्पितप्रपञ्चभागिने नमश्शिवाय। भक्तसङ्कटापहारयोगिने नमश्शिवाय युक्तसन्मनस्सरोजयोगिने नमश्शिवाय ॥२५॥ अन्तकान्तकायपापहारिणे नमश्शिवाय शान्तमायदन्तिचर्मधारिणे नमश्शिवाय। सन्तताश्रितव्यधाविदारिणे नमश्शिवाय जन्तुजातनित्यसौख्यकारिणे नमश्शिवाय ॥२६॥ शूलिने नमो नमः कपालिने नमश्शिवाय पालिने विरञ्चितुण्डमालिने नमश्शिवाय। कीलिने विशेषरुण्डमालिने नमश्शिवाय शीलिने नमःप्रपुण्यशालिने नमश्शिवाय ॥२७॥ शिवं पञ्चाक्षरं मुद्रां पदचतुष्टयोल्लासपद्यमणिघटिताम्। नक्षत्रमालिकामहृदघदुपकण्ठं नरो भवेत्सोमः॥

॥ इति शिवापञ्चाक्षरीनक्षत्रमालिका समाप्ता ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

# शिवषडक्षरस्तोत्रम्

ॐकारं बिन्दुसंयुक्तं नित्यं ध्यायन्ति योगिनः।
कामदं मोक्षदं चैव ॐकाराय नमो नय: ॥१॥

नमन्ति ऋषयो देवा नमन्त्यप्सरसां गणाः।
नरा नमन्ति देवेशं नकाराय नमो नमः ॥२॥

महादेवं महात्मानं महाध्यानपरायणम्।
महापापहरं देवं मकाराय नमो नमः ॥३॥

शिवं शान्तं जगन्नाथं लोकानुग्रहकारकम्।
शिवमेकपदं नित्यं शिकाराय नमो नमः ॥४॥

वाहनं वृषभो यस्य वासुकिः कंठभूषणम्।
वामे शक्तिधरं देवं वकाराय नमो नमः ॥५॥

यत्र यत्र स्थितो देवः सर्वव्यापी महेश्वरः।
यो गुरुः सर्वदेवानां यकाराय नमो नमः ॥६॥

षडक्षरमिदं स्तोत्रं यः पठेच्छिवसंनिधौ।
शिवलोकमवाप्नोति शिवेन सह मोदते ॥७॥

॥ इति श्रीरुद्रयामले उमामहेश्वरसंवादे
शिवषडक्षरस्तोत्रं संपूर्णम् ॥


CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

# लघुवासुदेवमननम्

## प्रथमवर्णकम्

सर्वतन्त्रस्वतन्त्राय सदात्माद्वैतवेदिने ।
श्रीमते शंकरार्याय वेदान्तगुरवे नमः ॥१॥

योऽवतीर्ण इहाचार्यरूपेण यतीनां मुदे ।
श्रीमन्नारायणं वन्दे तं हरिं करुणानिधिम् ॥२॥

मननाख्यं प्रकरणं वासुदेवयतीश्वरैः ।
रचितं विस्तरेणाद्य संग्रहेण प्रकाश्यते ॥३॥

बालानामुपकाराय मम विज्ञानसिद्धये ।
तत्र श्रीबालगोपालकृष्णः सन्निहितो भवेत् ॥४॥

इह खलु धर्मार्थकाममोक्षाणां चतुर्णां पुरुषार्थानां मध्ये मोक्ष एव परमपुरुषार्थः, नित्यत्वात्, 'न च पुनरावर्तते न च पुनरावर्तते' (छा० ८. १५. १.) इति श्रुतेः । इतरेषां त्रयाणां न तथात्वम्, अनित्यत्वात् 'तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते' (छा० ८. १. ६.) इति श्रुतेः । स च मोक्षो ब्रह्मज्ञानादेव सिध्यति, 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' (श्वे० ६. ५.), 'ब्रह्मविदाप्नोति परम्' (तै० २. १.) इत्यादिश्रुतिभ्यः ।

तच्च ब्रह्म अध्यारोपापवादाभ्यां ज्ञातव्यम्, आरोपितनिवृत्त्यैवाधिष्ठानज्ञानोदयात्, 'अध्यारोपापवादाभ्यां ज्ञातव्यस्तत्त्वनिर्णयः', 'न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुः' (कैवल्य० ३) इति वचनात्, तस्मान्मुमुक्षुणा अध्यारोपापवादाववश्यं ज्ञातव्यौ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तत्राध्यारोपो नाम शुक्तिकायां रजतवत्, रज्जौ सर्पवत्, स्थाणौ पुरुषवच्च निष्प्रपञ्चात्मवस्तुनि प्रपञ्चारोपः। अयमध्यारोपोवस्त्वज्ञानादागतः। तदज्ञानमेवाविद्या तमो मोहो मूलप्रकृतिप्रधानं गुणसाम्यमव्यक्तं मायेति चोच्यते। मूलप्रकृतिर्नाम शुक्लरक्तकृष्णतन्तुसमुदायरूपरज्जुवत् सत्त्वरजस्तमोगुणसमुदायरूपा। अस्याः प्रलयो महासुषुप्तिश्च नाम। अस्यां मूलप्रकृतावनन्तकोटिजीवाः स्वस्वकर्मवासनाभिः सह जतुपिण्डे सुवर्णरेणव इव सृष्टेः पूर्वं लीना वर्तन्ते। अयमनुभवः सकलजनानां सुषुप्त्यवस्थायामस्ति। सा मूलप्रकृतिः सृष्टिकाले परिपक्वजीवकर्मवशान्मायाऽविद्या तामसीति त्रिविधा जाता। तत्र माया विशुद्धसत्त्वप्रधाना। तत्र प्रतिबिम्बितं सत्सृष्टेः पूर्वं विद्यमानं ब्रह्म चैतन्यमीश्वर इत्युच्यते। तस्याव्याकृतोऽन्तर्यामीति च नाम। स एव जगत्स्रष्टा। स एव परिपूर्णं ब्रह्मचैतन्यम्। तदेव तामस्यवच्छिन्नं सज्जगदुपादानमपि भवति। तन्तोरूर्णनाभवत्स्वोपाधिप्राधान्येनोपादानकारणं स्वप्राधान्येन निमित्तकारणम्।

अयमीश्वरः केन प्रकारेण जगत्सृष्टवानिति चेत्, उच्यते—पूर्वोक्ताऽविद्या रजःप्रधाना बहुप्रकाराऽनन्ता। तदविद्याप्रतिबिम्बितचैतन्यरूपा जीवा अप्यनन्ताः। अनयोर्जीवेश्वरयोर्व्यष्टिरूपाऽविद्या समष्टिरूपा मूलप्रकृतिश्च क्रमेण कारणशरीरे। तयोः कारणशरीरयोर्जीवस्येश्वरस्य चावस्थानं सुषुप्त्यवस्था। तयोः स्वस्वकारणशरीरमेवानन्दमयकोशः। एवं कारणप्रपञ्चसृष्टिः॥

अथ सूक्ष्मप्रपञ्चसृष्टिरुच्यते—ईश्वरस्येक्षणवशात्तमोगुणरूपा प्रकृतिरावरणशक्तिर्विक्षेपशक्तिरिति द्विविधा जाता। तत्र विक्षेपशक्तिरेव सूक्ष्म आकाशोऽभवत्। आकाशाद्वायुः। वायोरग्निः। अग्नेरापः। अद्भ्यः पृथिवी। एतेषां पञ्चभूतानां सूक्ष्मभूतान्यपञ्चीकृतानि तन्मात्राणि चेति नाम। एतेषामपि सत्त्वरजस्तमोगुणाः

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

कारणादज्ञानादागताः सन्ति। एतेषामाकाशादीनां पृथक्पृथक्सत्त्व-गुणांशाच्छ्रोत्रं त्वक्चक्षुर्जिह्वा घ्राणमिति पञ्च ज्ञानेन्द्रियाणि क्रमेण जातानि। आकाशादिसत्त्वसमष्ट्याऽन्तःकरणं जातम्। तच्च मनोबुद्ध्यहङ्कारचित्तभेदेन चतुर्विधम्। तत्र बुद्धावहङ्कारस्य, मनसि चित्तस्य चान्तर्भावः। एवमाकाशादिरजोगुणाद्वाक्पाणि-पादोपस्थपायव इति पञ्च कर्मेन्द्रियाणि जातानि। आकाशादिरजो-गुणसमष्ट्या प्राणो जातः। स च प्राणापानव्यानोदानसमानभेदेन पञ्चविधः। एतज्ज्ञानेन्द्रियपञ्चकं कर्मेन्द्रियपञ्चकं प्राणपञ्चकं मनो बुद्धिश्चैकीभूय सप्तदशात्मकं सूक्ष्मशरीरं लिङ्गाख्यमुच्यते। इदमेव भोगसाधनम्। अस्मिन्सूक्ष्मशरीरे जीवेश्वरयोरवस्थितिः स्वप्ना-वस्था। अस्मिन्विज्ञानमयकोशो मनोमयकोशः प्राणमयकोशश्च सन्ति। एवं सूक्ष्मसृष्टिप्रकारः॥

अथ स्थूलसृष्टिप्रकार उच्यते—अथ तमोगुणप्रधानान्यपञ्ची-कृतान्याकाशादीनि पञ्चापि भूतानि प्रत्येकं द्वेधा विभज्य तत्रैकै-कमर्धं चतुर्धा विभज्य स्वार्धभागं विहायेतरभूतार्धभागेषु संयोजनं पञ्चीकरणम्। एवं कृते पञ्चपि पञ्चीकृतानि भवन्ति। एतेभ्यः पञ्चीकृतेभ्यो भूतेभ्यो ब्रह्माण्डं तदन्तश्चतुर्दश भुवनानि तेषु चाण्डजजरायुजस्वेदजोद्भिज्जरूपचतुर्विधस्थूलशरीराण्यन्नादिभोग्य-वस्तूनि च जातानि। अस्मिन्स्थूलशरीरे जीवेश्वरयोरवस्थानं जाग्रदवस्था। इदं स्थूलमेवान्नमयकोशः। एवं स्थूलसृष्टिप्रकारः।

इदं कारणशरीरं सूक्ष्मशरीरं स्थूलशरीरं च प्रत्येकं व्यष्टि-समष्टिभेदेन द्विविधम्। 'वनम्' 'ग्रामः' इत्यादि समष्टिः, 'वृक्षः' 'गृहम्' इत्यादि व्यष्टिः, एवं सर्वशरीरं समष्टिः, एकशरीरं व्यष्टिः तत्र समष्ट्युपाधिक ईश्वरः, व्यष्ट्युपाधिको जीवः। तत्रापि कारणसमष्ट्येश्वरः, कारणव्यष्ट्या प्राज्ञः। सूक्ष्मसमष्ट्या हिरण्य-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

गर्भः, सूक्ष्मव्यष्ट्या तैजसः। स्थूलसमष्ट्या वैश्वानरः, स्थूलव्यष्ट्या विश्वः। इति जीवेश्वरयोरवान्तरभेदः॥

अयमेवेश्वरः सत्त्वरजस्तमोगुणैरुपाधिभिर्ब्रह्मविष्णुरुद्ररूपेण सृष्टिस्थितिसंहारान्करोति। ब्रह्मणो विराट्पुरुषेऽन्तर्भावः। विष्णोर्हिरण्यगर्भेऽन्तर्भावः। रुद्रस्य चेश्वरेऽन्तर्भावः। एवं प्रपञ्चोत्पत्तिः। अयमेवाध्यारोपः। इदं विक्षेपशक्तिकार्यम्॥

अथावरणशक्तिकार्यमुच्यते—ईश्वरमात्मज्ञानिनं च विहायान्येषां सर्वेषां जीवानां पञ्चकोशानामात्मनश्च भेदमावरणशक्तिरन्धकार इवावृणोति। आवरणं च द्विविधमसत्त्वावरणभानावरणं चेति। 'वस्तु नास्ति' इति व्यवहारकारणमसत्त्वावरणम्। 'वस्तु न भाति' इति व्यवहारकारणमभानावरणम्। आवरणशक्तिकार्यमेव संसारवृक्षस्य मूलम्, न विक्षेपशक्तिकार्यम्। एतन्मोक्षसिद्धेरपि हेतुः। द्विविधमप्यावरणं तत्त्वज्ञानेन विनाश्यम्। तत्त्वज्ञानं च परोक्षज्ञानमपरोक्षज्ञानं चेति द्विविधम्। तत्र गुरुमुखाद्वेदान्तजन्यं ज्ञानं परोक्षज्ञानम्। इदमेव श्रवणम्। अनेन 'वस्तु नास्ति' इत्येवंरूपमसत्त्वावरणं नश्यति। तदा 'वस्त्वस्ति' इति व्यवह्रियते। श्रवणेन संशयं, मननेनासम्भावनां, निदिध्यासनेन विपरीतभावनां च निवर्त्य देहात्मज्ञानवद्ब्रह्मात्मज्ञानं जायमानमपरोक्षज्ञानम्। अनेन 'वस्तु न भाति' इति व्यवहारहेतुरभानावरणं नश्यति। एवं परोक्षज्ञानेन च 'ब्रह्म नास्ति न भाति' इति व्यवहारहेतुरावरणद्वयमपि नश्यति। तदाऽनर्थनिवृत्तिरानन्दावाप्तिश्च भवतः। इति सप्तावस्थाः सिध्यन्ति। सप्तावस्था नाम—'अज्ञानमावृतिस्तद्वद्विक्षेपश्च परोक्षधीः। अपरोक्षमतिः शोकहृतिस्तृप्तिर्निरङ्कुशा॥' (पं० द० ७।३३) इति। एवमाकाशवन्निर्मले चैतन्यवस्तुनि मिथ्याभूतप्रपञ्चकल्पनमध्यारोपः॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अथापवाद उच्यते—'कारणव्यतिरेकेण कार्यं नास्ति' इति बोधेन शुक्तिकायां रजतवद्रज्जौ सर्पवच्च 'ब्रह्मणि प्रपञ्चो नास्ति' इति निषेधोऽपवादः। 'या मा सा माया' 'या न विद्यते साऽविद्या' इति व्युत्पत्त्या मायायाः कल्पितत्वं सिद्धम्। एवं यः 'ब्रह्मव्यतिरेकेण किमपि नास्ति तद्ब्रह्माहमेव' इति विचार्य जानाति स एव जीवन्मुक्त इति वेदान्तसिद्धान्तः॥

॥ इति प्रथमवर्णकम् ॥

## द्वितीयवर्णकम्

अथ द्वितीयवर्णकेऽनुबन्धचतुष्टयमुच्यते। विषयः प्रयोजनं संबन्धोऽधिकारी चेत्यनुबन्धचतुष्टयम्। अस्य वेदान्तशास्त्रस्य ब्रह्मैव विषयः। मोक्ष एव प्रयोजनम्। प्रतिपाद्यप्रतिपादकभावो बोध्य-बोधकभावो वा संबन्धः। साधनचतुष्टयसंपन्नोऽधिकारी। यथा बृहस्पतिसवने ब्राह्मण एव, राजसूये क्षत्रिय एव, तथा वेदान्तशास्त्रे साधनचतुष्टयसंपन्न एवाधिकारी। नित्यानित्यवस्तुविवेक इहामुत्रार्थ-फलभोगविरागः शमादिषट्कं मुमुक्षुत्वं चेति साधनचतुष्टयम्। 'ब्रह्मैव नित्यम्, जगदनित्यम्' इति श्रुतिस्मृतिपुराणादिना स्वयमेव जायमानं ज्ञानं नित्यानित्यवस्तुविवेकः। 'इह स्रक्चन्दनादिविषय-भोगोऽमुत्राप्सरःस्त्रीविषयादिभोगश्चेत्युभयमप्यनित्यम्' इति श्ववा-न्ताशनमूत्रपुरीषादिवत्तत्र वैरस्यमिहामुत्रार्थफलभोगविरागः। शमदमोपरतितितिक्षासमाधानश्रद्धा इति शमादिषट्कम्। शमो नाम श्रवणादिव्यतिरिक्तेभ्यो निवर्त्यात्मन्येव श्रवणादिविषये मनसः स्थापनम्। दमो नाम ज्ञानकर्मेन्द्रियनिग्रहः। उपरतिर्नाम संन्यासो निष्कामकर्मानुष्ठानं व्यवहारपोलो वा। तितिक्षा नाम प्रारब्धा-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

गतशीतोष्णादिसहनम् । समाधानं नाम श्रवणाद्यनुकूलविषये मनसः समाधिः । श्रद्धा नाम गुरुवेदान्तवाक्यविश्वासः । इति शमादिषट्कम् । गृहे दह्यमाने तत्रस्थो दह्यमानः पुरुषो यथा कलत्रपुत्रादिकं परित्यज्य स्वतामोपशमनार्थमेव बहिर्निर्गत्य तापोपशमनं कर्तुमिच्छति, एव सांसारिकतामोपशमनं संपादयितुं त्यक्तसर्वैषणस्य ब्रह्मतादात्म्यभावे मोक्षे तीव्रेच्छा मुमुक्षा । लोके केषाञ्चिन्नित्यानित्यवस्तुविवेके सत्यपि वैराग्यस्यादर्शनादिहामुत्रार्थफलभोगविरागेणापि भवितव्यमित्युक्तम् । तदुभयसत्त्वेऽपि केषाञ्चिदृषीश्वराणां कोपतापादिदर्शनाच्छमादिनापि भवितव्यमित्युक्तम् । एतत्त्रितये सत्यपि केषाञ्चिद्भक्त्येश्वरोपासकानां ज्ञानाधिकारादर्शनान्मुमुक्षयापि भवितव्यम् ।

एवं रूपोऽधिकार्युपहारसमित्पाणिः सन्सद्गुरुमुपगम्य नमस्कृत्य विश्वासविनयाभ्यां सह 'हे स्वामिन्, हे भगवन्, गुरो' इति संबोध्य 'जीवः कः? ईश्वरः कः? जगत्कीदृशम्? एतत्त्रितयं कस्मादागतम्? कस्माद्गमिष्यति?' इति प्रश्नं कुर्यात् । 'परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन । तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ॥' (मु० १.२.१२) इत्यादिश्रुतेः । 'तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया । उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥' (गी० ४.३४) इति गीतावचनाच्च ॥

एवं शिष्येण प्रार्थितः सद्गुरुर्दयया सत्त्वरजस्तमोगुणैर्जीवेश्वरजगतामागमनप्रकारं बोधयित्वा आत्मस्वरूपमपि करतलामलकवद्बोधयति । अस्याधिकारिणः साधनचतुष्टयं च बहुजन्मार्जितपुण्यपुञ्जपरिपाकवशादीश्वरानुग्रहेण लब्धमिति वेदितव्यम् । एतत्तत्त्वज्ञानप्रदायकं गुरुमीश्वरमेव विद्यात् । एवं यो गुरुमुखाज्जी-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

वात्मपरमात्मनोरभेदं विचार्य जानाति स एव मुक्तिं गमिष्यतीति सिद्धम् ॥

॥ इति द्वितीयवर्णकम् ॥

## तृतीयवर्णकम्

अयं प्रपञ्चः कतिविध इति चेदात्माऽनात्मा चेति द्विप्रकारः। प्रपञ्चातीतस्यात्मनः कथं प्रपञ्चान्तर्भूतत्वमिति न शङ्कितव्यम्। कथमिति चेत्, अस्य प्रपञ्चस्य चेतनाचेतनात्मकत्वादात्मनश्चेतनरूपत्वादात्मानं विना प्रपञ्चस्याभावादात्मनः प्रपञ्चान्तर्भावो वक्तव्य एव। तर्हि चेतनं किमचेतनं किमिति चेत्, जङ्गमं सर्वं चेतनं, स्थावरं सर्वमचेतनम्। तर्हि चेतनानामचेतनानां च प्रत्येकं बहुप्रकारत्वात्कथं द्विप्रकार एव प्रपञ्च इति चेच्छृणु। अनात्मैक एव। स कार्यरूपेणानेकरूपोऽभूत्। आत्मा चैकरूप एव। सोऽप्यनात्मकार्योपाधिभिरनेकजीवा इत्यनेकेश्वरा इति च भाति। एकस्येश्वरस्य जीववत्कथमनेकत्वमिति चेत्, पुण्यक्षेत्रेषु ग्रामेषु गृहेषु च शिवविष्ण्वादिमूर्तिभेदेन स्थितत्वादिति ब्रूमः। मृच्छिलादिरूपाणां तासां मूर्तीनां कथमीश्वरत्वमिति चेत् ईश्वरत्वमस्ति, सर्वैरपि तासु मूर्तिषु बहुद्रव्यव्ययं कृत्वा अभिषेकनैवेद्यादेः क्रियमाणत्वात्। येषां शास्त्रे विश्वासो नास्ति ते म्लेच्छादयो मूर्तीनां पूजने नोदाहरणीयाः, सर्वतःश्रद्धावतामेवोदाहरणीयत्वात्। किं च हेये मलमूत्राद्यात्मकेऽस्मिञ्छरीर आत्मबुद्धिं कुर्वतां जीवानामत्यन्तशुद्धासु मूर्तिष्वीश्वरबुद्धिकरणे को वा दोषः?

एवमेकस्यानात्मनः कार्यरूपेणानेकत्व एकस्यात्मनोऽनात्मकार्योपाधिभिरनेकत्वे च दृष्टान्तः क इति चेत् शृणु। यथैकैव

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

पृथिवी कार्यरूपेण परिणता सती पर्वतो वृक्षो गोपुरं कुड्यं कुसूलं गृहं मठो घटः शराव इत्यादिभेदं गच्छति, तथा मूलप्रकृतिरनात्मैक एव कार्यशरीररूपेणानेको जातः; यथा आकाश एक एव पृथिवी-कार्योपाधिषु प्रविष्ट इव प्रतीयमानः 'अयं घटाकाशः' 'अय मठा-काश.' इत्यादिरूपेणानेकधा भाति, तथा आत्मा स्वयमेकोऽपि तत्तच्छरीरोपाधिभिस्तत्र प्रविष्ट इव सन् देवो मनुष्यो रामः कृष्णो ब्राह्मणः क्षत्रियो वैश्यः शूद्रः पशुः पक्षी कृमिः कीट इति बहुधा भाति। अयमवच्छिन्नपक्षे दृष्टान्तः प्रतिबिम्बपक्षे तु, समुद्रो नदी तटाकः कूपो घटजलमित्येकमेव जलं यथा बहुधा जातम्, तथाऽ-नात्मापि बहुधा जातः तेषु समुद्रादिष्वादित्य एक एव प्रतिबिम्बितः सन्यथा बहुधा जातः, तथैक एवात्माऽन्तःकरणसहितेषु सर्वेष्वपि शरीरेषु प्रतिबिम्बितः सन्ननेको जातः, इत्युभयत्रापि दृष्टान्तो ज्ञातव्यः। यथा जलधर्माः शीतचलनादयस्तज्जलनिष्ठप्रतिबिम्ब एव भान्ति बिम्बभूनमादित्यं न स्पृशन्ति, तथाऽन्तःकरणधर्मा कर्तृत्व-भोक्तृत्वविकारा अपि तदन्तःकरणनिष्ठचिदाभास एव भान्ति बिम्बभूतमात्मानं न स्पृशन्ति। तस्माज्जीवात्मैव परमात्मा परमात्मैव जीवात्मा। कथमिति चेत्, यथा घटाकाश एव महाकाशो महाकाश एव घटाकाश एवमिति जानीहि॥

ननु जीवात्मनः कल्पितत्वात्कल्पितस्य चासत्यत्वात्कथं तस्य सत्यपरमात्माभेद इति चेत्, पारमार्थिको व्यावहारिकः प्राति-भासिक इति जीवस्त्रिविधः। एते जीवाः क्रमेण सुषुप्तिजाग्रत्स्वप्ना-भिमानिनः। यथा जले तरङ्गः कल्पितस्तरङ्गे च फेनः कल्पितः, तथा पारमार्थिके व्यावहारिकः कल्पितो व्यावहारिके च प्राति-भासिकः कल्पितः। यथा माधुर्यद्रवत्वशैत्यादीनि पारमार्थिकजल-निष्ठान्येव सन्ति तरङ्गे भान्ति तद्द्वारा फेनेऽपि भान्ति, तद्व-त्सच्चिदानन्दाः पारमार्थिककूटस्थनिष्ठा एव सन्तो व्यावहारिके

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

भान्ति तद्द्वारा प्रातिभासिकेऽपि भान्ति। यथा फेनस्तरङ्गं विना नास्ति तरङ्गोऽपि जलं विना नास्ति जलं तु परमार्थभूतम्, एवं प्रातिभासिकोऽपि व्यावहारिकं विना नास्ति व्यावहारिकोऽपि पारमार्थिकं विना नास्ति। तस्माद्यथा परमार्थत्वेन घटाकाशो महाकाश एव, एवं पारमार्थिकः कूटस्थः परमात्मैवेति सिद्धान्तः। एवम् 'नेति नेति' (बृ. २. ३. ६.) इति वाक्येन देहादिपञ्चकोशेभ्यः पारमार्थिकं कूटस्थं पृथक्कृत्य तं पारमार्थिकं कूटस्थम् 'अहम्' इति जानन्सन् तत् 'अहं ब्रह्मास्मि' इति श्रुतिविचारेण युक्तिभिर्दृढनिश्चयेन साक्षात्कृत्य तिष्ठति। स एष परिपूर्णब्रह्मस्वरूपः, तमेव पुण्यपापकर्माणि न स्पृशन्तीति सर्वा अप्युपनिषद एकतात्पर्येण घुष्यन्ति ॥

॥ इति तृतीयवर्णकम् ॥

## चतुर्थवर्णकम्

इदानीमस्य जीवस्य दुःखं च जन्म च कर्म च रागद्वेषादि चाभिमानश्चाविवेकश्चाज्ञानं चेत्येतेषु पूर्वंपूर्वं प्रत्युत्तरोत्तरं हेतुः तत्र दुःखादिचतुष्टयं चतुर्थपञ्चमवर्णकयोर्विचार्यते ॥

जीवात्मो दुःखं स्वाभाविकं वा आगन्तुकं वेति चेत्, आगन्तुकमिति ज्ञेयम्। स्वाभाविकमिति चेदनेकदोषाः सन्ति। तत्कथमिति चेत्, अस्य जीवात्मनो दुःखं स्वाभाविकं चेद्दुःखनिवृत्तिः कदाचिदपि न स्यात्; सुखमपि कस्यापि न स्यात्; दुःखनिवृत्त्यै सुखप्राप्त्यै च कस्यापि कर्म न स्यात्; सत्कर्मयोगाध्यानोपासनेषु कस्यापि प्रयत्नो न स्यात्; वेदशास्त्रपुराणानि च व्यर्थानि स्युरिति

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

जानीहि। ननु दुःखं स्वाभाविकमस्तु तन्निवृत्त्यै च प्रयत्नं करोत्विति चेत्; कदाचिदप्येतन्न संभवति, स्वाभाविकस्य स्वस्वरूपत्वात्। स्वस्वरूपनाशार्थं को वा प्रयत्नं कुर्यात्? स्वस्वरूपनाशे सति पुरुषार्थभाक्कः स्यात्? स्वाभाविकमेव स्वस्वरूपं कथमिति चेत्, गुडस्य मधुरगुणः स्वभावः। तस्य मधुरगुणस्य नाशे भवितव्ये गुडस्यैव नाशो भवेत्। तथा जीवात्मनो दुःखं स्वाभाविकं चेद् दुःखनाशे भवितव्य आत्मस्वरूपनाश एव स्यात्। आत्मनो नाशो नास्ति। अविनाशी नित्य इति च 'अविनाशी वा अरेऽयमात्मा', (बृ. ४. ५. १४.) 'आकाशवत्सर्वगतश्च नित्यः' 'न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित्। अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे॥' (कठ० २. १८.) इत्यादिश्रुतयो वदन्ति। तस्मादात्मनो दुःखं स्वाभाविकं न भवति, किं त्वागन्तुकमेवेति जानीहि। ननु स्वाभाविकं नश्यतु स्वरूपं तिष्ठत्विति चेत्, तन्न सम्भवति। नन्वग्नेः स्वाभाविकमुष्णत्वं मणिमन्त्रादिभिर्गच्छति; स्वरूपनाशोऽपि नास्ति, अन्यच्छैत्यमप्यागच्छति; तथाऽऽत्मनोऽपि दुःखं स्वाभाविकं भवतु, तदुत्कृष्टकर्मोपासनयोगबलेन गच्छतु, सुखं चागच्छत्विति वदसि चेत्, सा निवृत्तिस्तात्कालिक्येव नात्यन्तिकी। कथमिति चेत्, कर्मजन्यं सकलमपि कर्मनाशे नश्यति। त्वदुक्तदृष्टान्तदार्ष्टान्तिकयोरग्न्यात्मनोरुष्णत्वं दुःखित्वं च मणिमन्त्रादिभिरुत्कृष्टकर्मोपासनयोगैश्च गतमपि मण्याद्यपनये कर्मादिक्षये च शैत्यं च सुखं च गच्छेत्, पुनः स्वाभाविकमुष्णत्वं दुःखित्वं चागच्छेत्। एवं च सति सर्वजीवानां तात्कालिकमुक्तिं विना पुनर्जन्मरहिता मुक्तिर्न स्यात्। किं च मोक्षस्य जन्यत्वे अनित्यत्वमपि स्यात्। 'न च पुनरावर्तते' इति मुक्तेर्नित्यत्वप्रतिपादकश्रुतेः 'अखण्डमानन्दमरूपमद्भुतम्' इति श्रुतेश्च विरोधः स्यात्। आत्मनो दुःखस्वभावत्वे सुषुप्त्यवस्थायां तूष्णींभावे योगिनां समाधौ च

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

दुःखमेव प्रतीयेत। तथा न दृश्यते। किं तु त्रयाणामपि व्युत्थानानन्तरम् 'एतावत्पर्यन्तं सुखमेवाहमासम्' इति सुखमेव स्मर्यते। तस्मादात्मनः सुखमेव स्वाभाविकं दुःखमागन्तुकमिति जानीहि॥

सुखस्वरूपस्याप्यात्मनो दुःखं शरीरपरिग्रहेणागतम्, 'यत्र यत्र शरीर-परिग्रहस्तत्र तत्र दुःखम्' इति व्याप्तेः। ननु लोके राजादीनामपि शरीरपरिग्रहेण दुःखमस्ति वेति चेत्; अस्त्येव, तेषामपि शत्रुपीडया राज्यभारेण धनधान्यक्षयेण स्त्रीपुत्रादिमरणेन जरादिना स्वमरणेन च दुःखदर्शनात्। लोके 'केचित्सुखेन वर्तन्ते' इति व्यवहारो वृथा मोह एव। मोहेनापि दुःखस्य सुखत्वव्यवहारः कथमिति चेत्। भारवाहको बहुयोजनदूरं कार्यार्थं त्वरया धावन्, तथा सन्ततमपि कृष्यादिकर्मकरणशीलश्चेत्येवमादयः सर्वेऽपि स्वस्वकर्मणो दुःखरूपत्वेऽपि मोहेन तत्तत्कर्म सुखं मत्वा सन्तुष्टा गानं कुर्वन्त उत्साहवन्तश्च वर्तन्ते। तस्मान्मोहेन दुःखमेव सुखमिव भातीति ज्ञातव्यम्॥

तर्हि विवेकिनामपि शरीरपरिग्रहाद्दुःखमस्ति वेति चेत्, तेषामपि क्षुत्पिपासादिना शीतोष्णादिना व्याधिना सर्पवृश्चिकव्याघ्रादिना च दुःखमस्त्येव। तर्हि विवेक्यविवेकिनोः को विशेष इति चेत्, तयोर्बाह्यव्यापारेण विशेषाभावेऽप्यान्तरव्यापारेण विशेषोऽस्ति। यो विवेकी स महात्मा 'सकलमपि दुःखमन्तःकरणस्यैव नात्मनः, सच्चिदानन्दस्वरूपस्यात्मनोऽनृतजडदुःखस्वरूपान्तःकरणधर्मैरणुमात्रमपि सम्बन्धो नास्ति, इति श्रुतियुक्त्यनुभवैर्विचार्य ज्ञात्वा तिष्ठति। तथा हि 'असङ्गो ह्ययं पुरुषः' (बृ. ४. ३. १५.) इति श्रुतिः, निरवयवत्वात्सत्यत्वादित्यादिका युक्तयः, सुषुप्तितूष्णींभावसमाधिष्वनुभवश्च वेदितव्याः। योऽविवेकी स दुरात्मा त्वात्मस्वरूपमविचार्य देहादिकमेवात्मानं मत्वाऽनात्मधर्मानात्मन्या-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

रोप्याऽऽत्मधर्मांश्च सच्चिदानन्दाननात्मन्यारोप्यैवमन्योन्याध्यासं कुर्वन् 'अहं देवः' 'अहं मनुष्यः' 'अहमान्ध्रः' 'अहं द्राविडः', 'अहं ब्राह्मणः' 'अहं क्षत्रियः' 'अहं वैश्यः' 'अहं शुद्रः', 'अहं ब्रह्मचारी' 'अहं गृहस्थः' 'अहं वानप्रस्थः' 'अहं संन्यासी' इत्यादिप्रकारेण जातिवर्णाश्रमाभिमानी तिष्ठति। एवं विवेक्यविवेकिनोर्बहुभेदोऽस्ति। विचार्यमाणे तयोर्बाह्यव्यापारेणापि न साम्यम्। कथमिति चेत्, विवेकी प्रपञ्चं सर्वमपि मिथ्येति निश्चित्य प्रारब्धभोगमपि स्वप्न-भागतुल्यमेव पश्यति। अविवेकी तु प्रपञ्चः सत्यः, आत्मनः सुख-दुःखानुभवोऽपि सत्य एवेति पश्यति। एवं विवेकिनामपि शरीर-परिग्रहवशाद्दुःखमस्त्येव।

देवानामपि 'वज्रहस्तः पुरन्दरः' इत्यादिवेदवचनेषु शरीर-परिग्रहदर्शनाद्दुःखमस्त्येव। कथमिति चेत्, अन्योन्यं युद्धतः कोप-शापाभ्यामसुरराक्षसोपद्रवात्पुण्यकर्मफलनाशे सति भाव्यधःपात-भयादपि दुःखमस्त्येव। कथं दुःखिनामपि तेषामितरैरुपास्यत्वं कथं वा सुखदातृत्वमिति चेत् अस्मिल्लोके राजप्रभृतीनां दुःखिनामपि स्वाश्रितपरिपालनादिकं यथा तथेति ज्ञेयम्। 'देवलोके देवा आनन्दरूपास्तिष्ठन्ति' इति श्रुतेर्देवा दुःखं सर्वमप्यन्तःकरणधर्मं मत्वाऽऽत्मानन्दस्वरूपं सदाऽनुभवन्त एव तिष्ठन्तीति तात्पर्यम्। तेषामपि दुःखमस्तीति वदन्त्याः, 'ता एता देवताः सृष्टा अस्मि-न्महत्यर्णवे प्रापतन्' (ऐ० २. १.) इति श्रुतेर्देवानामपि शरीर-परिग्रदाद्दुःखमस्त्येवेति तात्पर्यम्। तस्माद्विदेहमुक्त्यर्थमेव प्रयत्नः कर्तव्यः॥

नन्वशरीरमुक्तेरेव मुक्तित्वं चेत्सशरीरा आकाशे नक्षत्ररूपेण परिदृश्यमानाः केचन देवा मुक्ता इति मनुष्यैः कथं कथ्यन्त इति चेत्, शृणु। सालोक्यं सामीप्यं सारूप्यं सायुज्यमिति चतुर्विधा

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

मुक्तिः। चर्या क्रियायोगो ज्ञानमिति चतुर्णां क्रमेण साधनानि। भगवत्कैङ्कर्यरूपदासभावश्चर्या। शिवविष्ण्वादिपूजाविधिः क्रिया। यमनियमाद्यष्टाङ्गयोगो योगः। जीवपरमेश्वरयोरैक्यसाक्षात्कारो ज्ञानम्। तत्राद्यास्तिस्रो मुक्तयो मुख्या न भवन्ति, पुनरावृत्तिसंभवात्। सायुज्यमेव मुख्या मुक्तिः, पुनरावृत्तिवर्जनात्। 'योगेन सायुज्यम्' इति शास्त्रं निर्गुणब्रह्मयोगविषयम्। सशरीरमुक्तानामिवाशरीरमुक्तानां कदाचिदपि कुत्रचिदपि केनापि कथंचिदपि दर्शनाभावाच्छून्यमेवाशरीरमुक्तिरिति न मन्तव्यम्। अशरीरमुक्तानां शरीरस्यैव शून्यत्वं न स्वरूपसुखस्य। स्वरूपसुखं तु सुषुप्तिसुखवदशरीरत्वात्स्वसंवेद्यमेव नान्यसंवेद्यम्। सुषुप्तिर्मुक्तिसमाना चेत्सापि मुक्तिः स्यादिति न वाच्यम्। सुखानुभवमात्रेण साम्येऽपि सुषुप्तावज्ञानं पुनरुत्थानं चास्ति मुक्तौ तदुभयमपि नास्ति। अतः सुषुप्तेर्मुक्तित्वं न संभवति। अत एव प्रलयस्यापि न मुक्तित्वम्। एवं सुषुप्तिसुखवन्मुक्तिसुखस्य स्वानुभवगम्यत्वात्प्रत्यक्षत्वमेव; न शून्यत्वम्। तर्हि सशरीरमुक्तीनामिवाशरीरमुक्तेरपि प्रत्यक्षत्वे तत्र को भेद इति चेत्, अज्ञाननिवृत्तिः पुनरुत्थानाभावश्च भेद इत्युक्तम्। एवं श्रुतियुक्तिभ्यामशरीरमुक्तेः परमसुखत्वं शरीरपरिग्रहेण दुःखं चोक्तम्। इदानीमनुभवेनापि तदुभयं वदामः। नित्यं सुषुप्तौ शरीरपरिग्रहाभावाद्दुःखाभावश्च जाग्रत्स्वप्नयोः शरीरपरिग्रहेण दुःखं च सर्वैरनुभूयते। तस्मात् 'यत्र शरीरपरिग्रहस्तत्र दुःखम्' इति व्याप्तेरानन्दस्वरूपस्याप्यात्मनः शरीरपरिग्रहादेव दुःखमागच्छति न तु स्वतः। तस्य शरीरस्य को वा हेतुरिति चेत्पूर्वकर्मसहितपञ्चीकृतभूतान्येव; न केवलभूतानि, तेषां सर्वत्र वर्तमानत्वात्तेभ्यः शरीरं स्यादिति न वक्तव्यम्॥

ननु शुक्रशोणितरूपेण परिणतानामेव भूतानां शरीरकारणत्वेन विवक्षितत्वात्तादृशान्येव शरीरस्य कारणमिति न वक्तव्यम्,

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

व्यर्थशुक्रशोणितेषु शरीरोत्पत्त्यदर्शनात्। तस्मात्कर्मसहितान्येव शरीरस्य कारणानि। पञ्चभूतानां देशकालादीनां च सर्वसाधारणत्वात्तत्तत्कर्मवैचित्र्यमेव शरीरवैचित्र्यहेतुः यथा मृदादीनां साधारणत्वेऽपि कुलालव्यापारवैचित्र्यमेव घटादिकार्यवैचित्र्यहेतुः, यथा दृष्टान्ते घटादेर्मृदुपादानकारणं कुलालव्यापारो निमित्तकारणम्, एवं दार्ष्टान्तिकेऽपि शरीरस्य पञ्चीकृतभूतान्युपादानकारणं तत्तत्कर्म निमित्तकारणम्। तस्माद्भोगप्रदकर्मणि सति शरीरपरिग्रहः यथा जाग्रत्स्वप्नयोः कर्मणो विद्यमानत्वाच्छरीरप्राप्तिः। कर्माभावे शरीराभावः; यथा सुषुप्तौ कर्माभावाच्छरीराभावः। किं च यथा मृदि सत्यामपि कुलालव्यापाराभावे घटोत्पत्त्यभावः, तथेश्वरसृष्टेषु पञ्चभूतेषु सत्स्वप्यात्मज्ञानेन कर्मसु नष्टेषु तस्य ज्ञानिनः शरीरं नोत्पद्यते ॥

ननु कर्मशास्त्रे 'अवश्यमनुभोक्तव्यं कृतं कर्म शुभाशुभम्। नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि।' इति, ज्ञानशास्त्रे 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा' (गी० ४. ३७) इति च वचनयोः परस्परं विरोधे कथं निर्णयः कर्तव्य इति चेत्; शृणु। शास्त्रे प्रबलवचनं दुर्बलवचनं चास्ति। प्रबलं सिद्धान्तवचनम्। दुर्बलं पूर्वपक्षवचनम्। प्रबलं दुर्बलं निरस्यति। तद्यथा 'अहिंसा परमो धर्मः' इति वचनं प्रबलमपि सत् 'यागे पशुवधः कर्तव्यः' इत्यतिप्रबलवचनेन निरस्यते, एवम् 'अवश्यमनुभोक्तव्यम्—' इति वचनम् 'तपसा किल्विषं हन्ति' (मनु. १२. १०४.) इति प्रबलवचनेन दुर्बलं सन्निरस्यते। तस्मात्सञ्चितेषु कर्मसु बहुषु सत्स्वप्यात्मज्ञानेन तानि नश्यन्त्येव। कर्माभावे जन्माभावः, जन्माभावे दुःखाभावः, दुःखाभावे आनन्दाविर्भाव इत्ययमेव सिद्धान्तः ॥

॥ इति चतुर्थवर्णकम् ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

## पञ्चमवर्णकम्

अस्यात्मनो दुःखं शरीरपरिग्रहाच्छरीरं च कर्मणेत्युक्तम्। तत्कर्म कतिविधमिति चेत्, शृणु। कर्म त्रिविधं पुण्यं पापं मिश्रं चेति। देवादिशरीरं पुण्यकर्मफलम्। तिर्यगादिशरीरं सर्वं पापकर्मफलम्। मनुष्यादिशरीरं मिश्रकर्मफलम्। एवमुक्तं त्रिविधमपि कर्मोत्कृष्टं मध्यमं सामान्यमिति प्रत्येकं त्रिविधम्। एवमुक्तकर्मभेदेन जन्मभेदश्च नानाप्रकारः। तथा हि हिरण्यगर्भादिशरीरं पुण्यकर्मोत्कृष्टम्। इन्द्रादिशरीरं पुण्यकर्ममध्यमम्। यक्षराक्षसपिशाचादिशरीरं पुण्यकर्मसामान्यम्। परतापकरं कण्टकवृक्षविषवृक्षव्याघ्रसर्पवृश्चिकोलूकमशकजलूकादिशरीरं सर्वं पापकर्मोत्कृष्टम्। पनसाम्रकदलीनारिकेलादिफलपत्रपुष्पविनियोगवद्वृक्षलतादिकं ग्रामसूकरमहिषगर्दभोष्ट्रादिकं च सर्वं शरीरं पापकर्ममध्यम्। अश्वत्थतुलसीबिल्वगवाश्वादिशरीरं पापकर्मसामान्यम्। इह मनुष्यलोके तु निष्कामकर्मानुष्ठानसाधनचतुष्टयसद्गुरुलाभश्रवणमननात्मज्ञानक्रमेण जीवन्मुक्तेर्विदेहमुक्तेश्च योग्यं मनुष्यशरीरं मिश्रकर्मोत्कृष्टम्। स्वाश्रमोचितकर्मणां काम्यकर्मणां चानुष्ठानयोग्यं शरीरं मिश्रकर्ममध्यमम्। चण्डालपुल्कसकिरातयवनादिशरीरं मिश्रकर्मसामान्यम्। तस्माद्विवेकिना पुरुषेणैतत्कर्मफलतारतम्यं विचार्य भूमौ मनुष्यजन्मनि मिश्रकर्मोत्कृष्टं जन्म यथा सिध्येत्तथा स्ववर्णाश्रमकर्माणि कृत्वा फलेच्छां विहायेश्वरार्पणं कृत्वा आत्मविचारद्वारा मोक्षप्राप्तावेव प्रयत्नः कर्तव्य इति सिद्धान्तः॥

एतत्त्रिविधमपि कर्म केन क्रियत इति चेत्, त्रिविधकरणैरेव क्रियत इति जानीहि। नन्वस्मिल्लोके 'अहं करोमि' 'अहं करोमि' इति वदतां सर्वेषामनुभवेनाऽस्मिन्देहे देहाभिमानी सन्नहंशब्दार्थतया य आत्मा वर्तते तस्यात्मनः कर्तृत्वे वक्तव्ये तं विहाय त्रिविधकर-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

णानां भवद्भिः कर्तृत्वं कथमुच्यत इति चेत्, शृणु। आत्मा अविकारी निष्क्रियः स्वगतभेदशून्यः। तस्मादात्मनः कर्तृत्वं वक्तुं न शक्यते। ननु कर्तृत्वं त्वात्मनिष्ठतया भाति; कर्ता चान्यो न दृश्यते; एतत्कथमिति चेत्; आत्मनि प्रतीयमानं कर्तृत्वमध्यासात्, न तु स्वभावत इति विजानीहि। स्वाभाविकमिति चेत्, न केनापि 'वेदान्तविचारं कृत्वा ममेदं कर्तृत्वं परिहरणीयम्, अस्यानपाये संसारबन्धो नापयास्यति' इति व्यर्थः प्रयत्नः करणीयः। आत्मनः कर्तृत्वं स्वाभाविकं भवतु प्रयत्नविशेषेण च नश्यत्विति चेत्, स्वभावस्य स्वरूपत्वात्स्वरूपनाशार्थं को वा प्रयत्नं कुर्यात्? स्वरूपनाशे सति को पुरुषार्थमनुभवेत्? किं च, अकर्ता जीवन्मुक्तो न चेत्तदा वेदान्तसंप्रदायो गुरुशिष्यौ च न स्युः। किं च, आत्माऽकर्ता साक्षी निष्क्रिय इति प्रतिपादकस्य 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्' (श्वे० ६. १९.) 'साक्षी चेता केवलो निर्गुणश्च' (श्वे० ६. ११.) इत्यादि श्रुतिवाक्यस्यापि हानिः स्यात्। सुषुप्तावात्मनि विद्यमानेऽपि कर्तृत्वं न दृश्यते। यदि कर्तृत्वं तस्य स्वाभाविकमग्नेरुष्णत्वमिवोपलभ्येत, तथा नोपलभ्यते। तस्मादात्मनः कर्तृत्वं न स्वाभाविकम्। ननु सुषुप्तौ कर्तृत्वानुपलम्भः करणवियोगात्, यथा तक्षादेः कर्तृत्वे विद्यमानेऽपि स्नानभोजनादिसमये तदनुपलम्भः, तद्वद्भवत्विति चेत्, न। तूष्णींभावावस्थायामन्तःकरणसंयोगे विद्यमानेऽपि कर्तृत्वानुपलम्भादात्मनः कर्तृत्व न स्वाभाविकम्, किं त्वाध्यासिकमेव॥

अध्यासो नामान्यनिष्ठधर्माणामन्यत्रावभासः। यथा नौनिष्ठगमनस्य तीरस्थवृक्षे तीरस्थवृक्षनिष्ठाचलत्वस्य नावि चाध्यासवशाद्भानम्, एवं विविधकरणनिष्ठकर्तृत्वस्यात्मन्यात्मनिष्ठाकर्तृत्वस्य विविधकरणं च भानमज्ञानवशादेव। तस्मादात्मनः कर्तृत्वमारोपादिति जानीहि। ननु जडस्य त्रिविधकरणस्याचेतनत्वाद-



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

चेतनस्य कथं कर्तृत्वम्; करणत्रयस्यैव कर्तृत्वे तस्य करणान्तरेणापि भवितव्यमिति चेत्, शृणु। यथा लोकेऽचेतनस्य वायोर्वृक्षानामुन्मूलने तेषां दूरनिरसने च करणं विना कर्तृत्वम्, यथा च जलप्रवाहस्याप्यचेतनस्य वृक्षादीनामुन्मूलने तेषां दूरनिरसने च करणं विना कर्तृत्वं दृश्यते, तथा त्रिविधकरणस्यापि करणान्तरं विना कर्तृत्वमुपपद्यते ॥

एतत्त्रिविधकरणकृतानि कर्माणि कानीति चेत्, उच्यते। सविशेषचिन्ता निर्विशेषचिन्ता परलोकचिन्ता भक्तिज्ञानवैराग्यचिन्तेत्यादिबुद्धिविकाराः सर्वेऽपि मनसा क्रियमाणानि कर्माणि मानसपुण्यकर्माणि। विषयचिन्ता परेषामपकारचिन्ता वेदशास्त्रयोरप्रामाण्यचिन्ता धर्माधर्माद्यभावचिन्तेत्यादिबुद्धिविकाराः सर्वेऽपि मानसपापकर्माणि। सविशेषचिन्ताया निर्विशेषचिन्तायाः पुण्यचिन्ताया अपि विषयचिन्तादिपापचिन्तया मिश्रीकृत्यानुष्ठानं मानसं मिश्रकर्म। वेदाध्ययनं शास्त्रपठनं गीतापठनं सहस्रनामपठनं पञ्चाक्षरादिमन्त्रजपो भगवन्नामकीर्तनं परोपकारवार्ता सत्यवाक्यं मृदुभाषणं पूर्वभाषणं च वाचा क्रियमाणं पुण्यकर्म। वेदशास्त्रदूषणं देवतादूषणमसत्यपिशुनपारुष्यवार्ता अपहासवार्ता चेत्यादि वचनं सर्वं वाचिकं पापकर्म। वेदाध्ययने पूजाकाल एवमादिपुण्यवार्तासु परनिन्दाया असत्यस्य परिहासस्य लौकिकवार्ताया एवमादिपापानां मिश्रीकृत्यानुष्ठानं वाचिकं मिश्रकर्म। पुण्यतीर्थस्नानं गुरुदेवतानमस्कारो देवपूजाप्रदक्षिणं सज्जनदर्शनं त्यागो लोकानुग्रहसंचार एवमादिकर्माणि कायेन क्रियमाणानि कायिकं पुण्यकर्म। परमहिंसा परस्त्रीसङ्गश्चौर्यं दुष्टसङ्ग इत्यादिकर्माणि कायेन क्रियमाणानि कायिकं पापकर्म। ब्राह्मणभोजनार्थं परोपद्रवो देवालयनिर्माणार्थं परद्रव्यापहारः प्रपां स्थापयित्वा भृतकस्याप्रदान-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

मेवमादिकर्माणि पुण्यानि च पापानि मिश्रीकृत्य कायेनानुष्ठीयमानानि कायिकं मिश्रकर्म ॥

एतानि त्रिविधान्यपि कर्माणि सम्यग्विचारणीयानि । विचारस्य फलं किमिति चेत्, मुख्यफलमवान्तरफलमिति फलद्वयमस्ति । कथमिति चेत् । इमानि त्रिविधकर्माणि त्रिविधैरेव करणैः क्रियन्ते । आत्मा स्वयमाकाशवदसङ्गो निरंशः परिपूर्णश्चैतन्यस्वरूपः अतो न कस्यापि कर्मणः कर्ता । अत एव 'यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह । यच्चास्य संततो भावस्तेन चात्मेति गीयते ॥' इत्युक्त आत्मशब्दस्यार्थः । तस्मात् 'नैकमपि कर्म चिदाकाशस्वरूपं स्पृशति' इति ज्ञात्वा संशयं विहाय दृढानुभवेनावस्थानं मुख्यफलम् । 'ब्रह्मज्ञाने सत्यपि त्रिविधकरणमपि पुण्यकर्मण्येव स्थापयितव्यम्, तदसंभवे मिश्रकर्मणि वा स्थापयितव्यम्, न कदाचिदपि पापकर्मणि' इति ज्ञात्वा तथैवावस्थानमवान्तरफलम् । यथा कदलीपोषकस्य कदलीफलं मुख्यफलं तत्पत्रपुष्पादिकमवान्तरफलम्, तथैव त्रिविधकरणकृतकर्मज्ञानस्यापि पूर्वोक्तफलद्वयमिति ज्ञेयम् ॥

नन्वम्भसा पद्मपत्रमिव कर्मणा ज्ञानी न लिप्यते; तस्य न कोऽपि विधिर्निषेधो वा, स त्वकर्ता कर्मसाक्षी कृतकृत्य इति सिद्धान्तितत्वात्; तस्य ज्ञानिनोऽज्ञानिन इव पुण्यकर्मैवानुष्ठेयमिति नियमः कथमिति चेत्, सत्यं स ज्ञानी कृतकृत्य एव, कर्तापि न भवति । न तत्र सन्देहः । तथापि ब्रह्मविद्ब्रह्मविद्वरो ब्रह्मविद्वरीयान्ब्रह्मविद्वरिष्ठ इति तेषां मध्ये ब्रह्मविद्वरिष्ठ एव विदेहमुक्तः । असौ वरिष्ठ एव वृत्तिशून्यः । तस्यैव न विधिर्निषेधश्च । अन्येषामपि त्रयाणां ज्ञानमहिम्ना विधिनिषेधाभावेऽपि वृत्तिशून्यत्वाभावाद्व्यवहारवत्त्वाच्च लोकानुग्रहार्थं सदाचार एव स्थातव्यमित्युच्यते, न तु नियम्यते । तस्मात्तत्त्वज्ञानिना कर्मिणां मध्ये कर्मिव-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

त्कर्मानुष्ठेयम्। जिज्ञासूनां मध्ये तु कर्म त्यक्त्वा 'ब्रह्मैव सत्यम्, अन्यत्सर्वमसत्यम्' इति ज्ञानमेवोपदेष्टव्यम्। अत्र प्रकृतं किमिति चेत्, त्रिविधकरणस्यैव कर्तृत्वं नात्मन इति निश्चितम् ॥

अथ त्रिविधमपि करणं स्वयमेव कर्तृ, अन्येन प्रेरितं वेति विचार्यमाणे रागद्वेषादिना प्रेरितमेव कर्तृ न स्वयम् रागद्वेषादौ सति करणत्रयं प्रवर्तते असति न प्रवर्तत इत्यन्वयव्यतिरेकाभ्यां रागद्वेषादेः करणप्रवर्तकत्वस्यानुभवसिद्धत्वात् ॥

ननु 'अहं देवालयं कारयामि' 'अहं तटाकं कारयामि' इत्यादि-व्यवहारादात्मा कारयिता भवत्विति चेत्, न आत्मनो निर्विकार-त्वान्न तत्रापि कारयितृत्वमुपपद्यते। आत्मनि कारयितृत्वं भातीति चेत्, जपाकुसुमनिष्ठं लौहित्यं स्फटिक इव रागद्वेषादिनिष्ठं कार-यितृत्वमात्मनि भ्रान्त्याऽऽरोप्यत इति ज्ञेयम्। स्वभाविकं चेत्तन्ना-शार्थं न कोऽपि प्रयत्नं कुर्यात्, स्वभावस्य स्वरूपत्वात् कथंचित्तस्य नाशे स्वरूपनाश एव स्यात्। आत्मनोऽपि कारयितृत्वं यदि स्यात्, तर्ह्यात्माऽसङ्गो निष्क्रियोऽकारयितेति प्रतिपादिका 'अदृष्टमव्यव-हार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमैकात्म्यप्रत्ययसारं प्रपञ्चोप-शमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः' (माण्डू० ७.) इति श्रुतिर्भज्येत अकारयितृत्वस्य जन्यत्वे तज्जन्यमुक्तेरपि जन्यत्वं स्यात्, सुषुप्तावपि कारयितृत्वं दृश्येत। तन्न दृश्यते। तस्मादात्मनः कारयितृत्वं न स्वाभाविकम्, किं त्वागन्तुकमेव ॥

ननु सुषुप्तौ कारयितृत्वादर्शनमात्रेणात्मनः कारयितृत्वं नास्तीति वक्तुं न शक्यते; यथोपाध्यायस्याध्यापकत्वं विद्यमानमपि शिष्यवर्गासन्निधाने दृश्यते; तद्वत्सुषुप्तौ करणसंयोगाभावाद्विद्य-मानमपि कारयितृत्वं न दृश्यते; जाग्रतस्वप्नयोः करणसंयोगस्य सत्त्वाद्दृश्यत इति वक्तुं शक्यत्वादिति चेत्, तर्हि जाग्रत्युदासीन-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तूष्णींभावावस्थायां करणसंयोगस्य विद्यमानत्वात्कारयितृत्वं दृश्येत, तन्न दृश्यते। तस्मादागन्तुकमेवेति वक्तव्यम्। यथा अन्योन्याध्यासादयोनिष्ठदीर्घत्वह्रस्वत्वादयोऽग्नावग्निनिष्ठोष्णत्वप्रकाशादयोऽयसि च भान्ति, तद्वदज्ञानादेव रागद्वेषादिनिष्ठकारयितृत्वमात्मन्यात्मनिष्ठाकारयितृत्वं रागद्वेषादौ च भाति॥

नन्वचेतनस्य रागद्वेषादेः कथं कारयितृत्वम्, न हि घटो घटान्तरं प्रेरयतीति चेत्, सत्यम्। तथापि कुत्रचिद्योग्यतावशाज्जडः प्रेरयति योग्यताऽभावात्कुत्रचिन्न प्रेरयति। यथा जडोऽप्यग्निर्गन्धकादिसंयुक्तेङ्गालचूर्णविशेषैः सहितः सञ्जडमेव बृहन्नलिकान्तःस्थितं स्थूलपाषाणं प्रेरयंस्तेन चतुरङ्गमेनां हन्ति; किं च प्रेतशरीरं जडमपि स्वज्ञातिक्रियमाणामपरक्रियां प्रति स्वयं कारयितृ भवति; एवमेवाचेतनमपि रागद्वेषादि कारयितृ भवति। तर्हि 'आत्मा हृषीकेशः सर्वान्तर्यामी' इति वदन्त्याः श्रुतेः किं तात्पर्यमिति चेत्, आदित्यवत्संनिधानमात्रेण सर्वकार्यानुकूलो भवतीति तात्पर्यम्। नन्वात्मा संनिधानमात्रेण सर्वप्राणिकर्महेतुर्हि, अत आत्मनोऽपि तत्पुण्यपापतत्फलसंबन्धोऽपि स्यादिति चेत्, न। यथा आदित्यस्य संनिधानमात्रेण सकलजनपुण्यपापानुकूलस्यापि तत्पुण्यं च तत्पापं च तत्फलं च यथा न स्यात्तथा आत्मनोऽपि मन्तव्यम्। अयश्चेष्टापि संनिधानमात्रेण स्वानुकूलां कान्तशिलां यथा न स्पृशति तथा प्राणिकर्माप्यात्मानमिति च ज्ञेयम्। तस्मान्नात्मनो निरञ्जनत्वनिर्विकारत्वभङ्गः॥

एवमात्मस्वरूपे प्रसिद्धे गुरुणोपदिश्यमानेऽपि प्रतिबन्धकत्रयेण न निश्चयो भवति। प्रतिबन्धकत्रयं च संशयभावनाऽसंभावना विपरीतभावना चेति ऋगादिशाखासूपदिश्यमानमुपनयनादिकर्म यथाऽनेकविधं तथर्गादिशाखासूपदिश्यमानमात्मतत्त्व-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

मप्यनेकप्रकारं वा न वेति संशयः संशयभावना। सा सकलवेदान्ततात्पर्यविधारणरूपश्रवणेन नश्यति। एवं सर्वेषां वेदान्तानामद्वैते ब्रह्मण्येव तात्पर्यमिति श्रवणेन प्रमाणविषये संशये नष्टेऽपि, इदमद्वैतं कथं संभाव्यते सत्यत्वेन प्रतीयमानेषु जीवेश्वरजगत्सु परस्परभिन्नेषु सत्स्विति बुद्धिरसम्भावना। इयं स्वप्नदृष्टान्तादिरूपयुक्त्यात्मकमननेन नश्यति। एवं श्रवणे मनने च कृतेऽपि, अनाद्यविद्यावासनया सर्वस्यापि जगतो यथापूर्वं सत्यत्वप्रतीतिर्विपरीतभावना। सा ब्रह्मैकाकारप्रत्ययप्रवाहरूपनिदिध्यासनेन नश्यति। एवं प्रतिवन्धकत्रयस्य नाशाकरणे यथा सर्वस्य दाहकोऽप्यग्निर्मणिमन्त्रादिप्रतिवन्धकैः प्रतिवद्धः सन्नेकं तृणमपि दग्धुं न शक्नोति, एवं ज्ञानाग्निरपि प्रतिबन्धकैः प्रतिबद्धः सन्नज्ञानतत्कार्येषु किंचिदपि दग्धुं न शक्नोति। पूर्वोक्तप्रकारेणास्मिन्प्रतिबन्धकत्रयेऽप्यपनीते सति सद्य एवाग्निस्तृणमिवायमप्यविद्यां तत्कार्यं सर्वमपि दग्धुं शक्नोति॥

किं च, 'उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्। अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये॥' इति वचनेन षड्विधलिङ्गैस्तात्पर्यनिर्णयः कर्तव्यः। अत्र छान्दोग्यषष्ठाध्याये 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' (छा० ६. २. १.) इत्युपक्रम्य 'ऐतदात्म्यमिदं सर्वं तत्सत्यम्' (छा० ६. ८. ७.) इत्यखण्डैकरस एवोपसंहृत इत्युपक्रमोपसंहारैकरूप्यमेकं लिङ्गम्। 'तत्त्वमसि' (छा० ६. ८. ७.) इति नवकृत्वस्तस्यैवाभ्यासो द्वितीयम्। अखण्डैकरसस्य प्रत्यक्षादिप्रमाणान्तराविषयत्वमपूर्वता तृतीयम्। 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये' (छा० ६. १४. २.) इत्यखण्डैकरसज्ञानस्य प्रारब्धभोगानन्तरं विदेहकैवल्यरूपफलवचनं चतुर्थम्। अर्थवादस्तु पञ्चमम्। 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

विज्ञात स्यात्–' (छां० ६. १. ४.) इत्यादिदृष्टान्तवचनमुपपत्त्याख्यं षष्ठम् । सृष्टिस्थितिप्रलयप्रवेशसंयमनतत्त्वंपदार्थपरिशोधनफलप्रतिपादका इति सप्तार्थवादाः । तत्र "तस्माद्वा एतस्यादात्मन आकाशः सम्भूतः" (तै० २. १.) इत्याद्याः सृष्ट्याद्यर्थवादरूपाः श्रुतय आकाशादेः सर्वस्य ब्रह्मण एवोत्पत्तेस्तस्मिन्नेवावस्थानात्पुनस्तत्रैव लयान्मृदुत्पत्तिस्थितिलयात्मकस्य घटादेर्मृदभेदवत्कारणब्रह्ममात्रतामवगमयन्त्यो महावाक्योक्तं ब्रह्मणोऽद्वितीयत्वं संभावयामासुः । तथा 'स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत' (ऐ० १. ३. १२) 'तत्सृष्ट्वा तदेवानुप्राविशत्' (तै० २. ६) 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' (छा० ६. ३. २.) इत्याद्याः श्रुतयो ब्रह्मण एव जीवरूपेण प्रवेशं ब्रुवन्त्यो बहिःस्थित्वाऽन्तर्गृहे प्रविष्टदेवदत्तवज्जीवब्रह्मणोरभेदं महावाक्यार्थं संभावयामासुः । तथा 'यः पृथिव्यां तिष्ठन्पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः' (बृ० ३. ७. ३.) इत्यादिनियमनश्रुतिश्चात्यन्तभेदे नियम्यनियामकभावानुपपत्तेस्तयोरभेदमेव संभावति । तथा 'स वा एष पुरुषोऽन्नरसमयः' (तै० २. १.) 'यदग्ने रोहितं रूपम्—' (छा० ६. ४. १.) इत्याद्यास्तत्त्वंपरिशोधनरूपाः श्रुतयो जीवेश्वरोभयगतविरुद्धधर्मनिरसनद्वारा तयोरैक्यमेव संभावयन्ति । तथा 'ब्रह्मविदाप्नोति परम्' (तै० २. १.) 'अमृतः समभवत्' (ऐ० ३. ४.) इत्याद्याश्चाभेदज्ञानस्य निरतिशयफलप्रदर्शनेनाभेदस्य विवक्षितत्वं ज्ञापयन्त्यस्तमेव संभावयन्ति । इत्थं सृष्टिस्थितिप्रलयप्रवेशसंयमनतत्त्वंपदार्थपरिशोधनफलप्रतिपादकैः सप्तविधार्थवादैरनुगृहीतं सज्जीवब्रह्मैक्यरूपमखण्डैकरसमेवावान्तरवाक्यैः सहितं यत्प्रतिपादयत्यतोऽखण्डैकरसत्वेनैव महावाक्यस्यार्थो वक्तव्य इति षड्विधलिङ्गैः श्रुतितात्पर्यावधारणं श्रवणमित्युक्तम् ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

इदानीं किं प्रकृतमिति चेत्। मयोक्तप्रकारेण विचार्यं 'रागद्वेषादिना प्रेरित सन्त्रिविधकरणं त्रिविधकर्म करोति, प्रधानप्रेरितसेनया सम्पादितं जयं राजा अहं जितवानित्यात्मन्यारोपयति, एवमात्मा च रागद्वेषादिनिष्ठं प्रेरकत्वमज्ञानादात्मन्यभिमन्यते, एवमात्मनः कर्तृत्वं कारयितृत्वं च नास्ति।' इति यो दृढं निश्चिनोति स एव जीवन्मुक्तः॥

॥ इति पञ्चमवर्णकम् ॥

## षष्ठवर्णकम्

पूर्वंप्रतिज्ञातदुःखादिसप्तके दुःखं शरीरं कर्म रागद्वेषादिश्चोत्तरोत्तरहेतुत्वेनोक्तानि। इदानीं षष्ठवर्णके रागद्वेषादिवृत्तिभेदा अभिमानोऽविवेकोऽज्ञानं च कथ्यन्ते। रागो द्वेषः कामः क्रोधो लोभो मोहो मदो मात्सर्यमीर्ष्याऽसूया दम्भो दर्पोऽहंकार इच्छा भक्तिः श्रद्धेति रागद्वेषादिवृत्तयः षोडश। स्त्रीविषयकचित्तवृत्तो रागः। अपकारकर्तुः प्रत्यपकारेच्छा द्वेषः। गृहक्षेत्रादिसंपादनेच्छा कामः। तत्र विघ्नकर्तरि वैरं क्रोधः। स्वसंपादितेषु किंचिदपि सत्पात्रे न देयमिति बुद्धिर्लोभः। ऐश्वर्यमदेन कृत्याकृत्यमविचार्यं तूष्णीमवस्थानं मोहः। स्वस्य संपदस्ति, किं वा कर्तुमशक्यमिति बुद्धिर्मदः। स्वसमानसंपन्नजनदर्शनासहनं मात्सर्यम्। इदं दुःखं तं विहाय मम किमित्यागतमिति चित्तवृत्तिरीर्ष्या। इदं सुखं ममैव, तस्यापि किमित्यागतमिति बुद्धिरसूया। अनेन धर्मेण मम प्रसिद्धिर्भूयादिति चित्तवृतिर्दम्भः। मम न कोऽपि समान इति बुद्धिदर्पः। सर्वत्राग्रहोऽहंकारः। अवर्जनीयप्राशनविमोचनादिकर्मचिकीर्षा इच्छा। गुरौ सज्जनेषु देवतासु चातिप्रीतिर्भक्तिः।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

-यागादिकर्मसु वेदान्तवाक्येषु गुरूपदेशे च विश्वासः श्रद्धा। इति षोडशविधो रागद्वेषादिः॥

आत्मविचारप्रकरणे चित्तवृत्तिविचारस्य किं प्रयोजनमिति चेत्, शृणु। सकलजीवानां बन्धमोक्षौ मनसैव नान्येन। कथमिति चेत्—स्वभावनिर्मलस्य मनसोऽशुद्धेन योगो बन्धः। शुद्धरूपेणावस्थानं मोक्षः। रागादिचतुर्दशवृत्तयोऽप्यशुद्धाः। भक्तिश्रद्धे द्वे अपि शुद्धे। रागादित्रयोदशवृत्तयः सर्वेषां प्रयत्नं विनैव पुनः पुनरागच्छन्ति पापेष्वेव मनुष्यान्प्रवर्तयन्ति च। तद्वृत्तिशीलानामधोगतिरेव नोर्ध्वंगतिः। रागादिवृत्तीर्निरुध्य भक्तिश्रद्धाभ्यामेव कर्म कुर्वतः क्रमेण संसारनिवृत्तिर्भविष्यति। तस्मात्पुरुषः स्वचित्तं सम्यक्शोधयित्वा अशुद्धिहेतुरागादिवृत्तीर्वर्जयित्वा शुद्धिहेतुभक्तिश्रद्धयोरेव चित्तं स्थापयेत्। इच्छया क्रियमाणं क्षुत्पिपासानिवृत्तिमूत्रपुरीषविसर्जनादि कर्म च त्यक्तुमशक्यम्। तत्त्यागे सत्यपि दुःखमागच्छति। तेन कर्मणा स्वर्गोऽपि नास्ति नरकोऽपि नास्ति। तस्मादैच्छिकं प्राशनमोचनादिकं कर्म कर्तव्यमेव॥

एवं जाग्रत्स्वप्नयो रागादौ सति कर्मास्ति, सुषुप्तिमूर्छासमाधितूष्णींभावावस्थासु रागादि नास्ति कर्मापि नास्ति, इत्यन्वयव्यतिरेकाभ्यां रागादेः कर्महेतुत्वं सिद्धम्। इतः परं स रागादिः केनागच्छतीति चेत्, अभिमानेनागच्छति। एवं व्याप्तिरस्ति वेति चेत्, अस्ति। स्त्रीजनस्य 'अहं स्त्रीजनः' इति यावानभिमानोऽस्ति तावती रागादिपूर्वकं भर्तृशुश्रूषागृहरक्षापाकक्रियादिकर्मसु प्रवृत्तिरागच्छति। पुरुषजनस्यापि 'अहं पुरुषः' इति यावानभिमान आगच्छति तावती रागादिपूर्वकं दारादिपरिग्रहे कृषिवाणिज्यादिकर्मसु च प्रवृत्तिरागच्छति। एवं एवैषां जीवानामपि वर्णाश्रमाद्यभिमानेन रागादिपूर्वकं स्वस्वव्यापारे प्रवृत्तिरागच्छति। तस्माद्रागादेरभिमान एव कारणम्॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अस्य विचारस्य किं फलमिति चेत्, मुमुक्षुः पुरुषो जातिवर्णाश्रमवयोवस्थाद्यभिमानं त्यजेत्, तस्मिंस्त्यक्ते बन्धस्त्यक्तो भवेदिति जानीहि। अभिमाने सति रागादिः, अभिमानाभावे रागाद्यभाव इत्यन्वयव्यतिरेकयुक्त्या च जानीहि। तत्कथमिति चेज्जाग्रदाद्यवस्थासु वर्णाश्रमाद्यभिमानस्य विद्यमानत्वाद्रागद्वेषादिनिमित्ता प्रवृत्तिरागच्छति, सुषुप्तावुदासीनावस्थायां च वर्णाश्रमाद्यभिमानाभावाद्रागद्वेषादिनिमित्ता प्रवृत्तिर्नास्तीत्येतज्जानीहि ॥

तर्ह्ययमभिमानः केनागच्छतीति चेत्, अविवेकेनागच्छति। तत्कथमिति चेत्—सर्वेषां जीवानां देहव्यतिरिक्तत्वे सत्यपि विवेकाभावादेव 'अहं ब्राह्मणः' 'अहं क्षत्रियः' 'अहं वैश्यः' 'अहं शूद्रः' 'अहं ब्रह्मचारी' 'अहं गृहस्थः' अहं वानप्रस्थः' 'अहं संन्यासी' 'अहं पुरुषः' 'अहं स्त्री' इत्याद्यभिमानो जायते। तं विना नान्यो हेतुः। अस्याभिमानस्याविवेकं विना अन्यच्छरीरमवलम्बनमस्ति चेत्, क्षत्रियस्य 'अहं ब्राह्मणः' इति, स्त्रियाः 'अहं पुरुषः' इति, ब्रह्मचारिणः 'अहं गृहस्थः' इत्यभिमानोऽस्तु। स न दृश्यते। तस्माच्छरीरमवलम्ब्याभिमानो नागच्छति। शिखायज्ञोपवीतादिकमवलम्ब्य 'अहं ब्राह्मणः' इति, काषायकमण्डल्वादिकमवलम्ब्य 'अहं संन्यासी' इति चाभिमान आगच्छत्विति चेत्। शिखायज्ञोपवीतादि वैश्यकुलालयोरप्यस्ति। काषायकमण्डल्वादि केषांचिच्छूद्राणां तपस्विनामप्यस्ति। तेषामेतेषां च 'अहं ब्राह्मणः' अहं संन्यासी' इत्यभिमानः स्यात्। तथा न दृश्यते। स्त्रीपुरुषाभिमानवदवयवविशेषमवलम्ब्य 'अहं ब्राह्मणः' इत्याद्यभिमान इति चेत्, सर्वेषामप्यवयवविशेषाभावादेकरूपत्वादवयवविशेषोऽप्यवलम्बनं न भवति। तर्हि विशिष्टमातृपितृजन्यावयवविशेषमवलम्ब्याभिमानविशेष इति चेत्, तज्जन्यरोमनखदन्तमूत्रपुरीषाद्यवयवानामपि ब्राह्मणत्वादिव्यवहारः स्यात्। स न दृश्यते। तस्मादविवेकं विना

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अन्यत्किमप्यवलम्ब्याभिमान आगच्छतीति ब्रह्मणापि वक्तुं न शक्यते ।।

तर्हि ब्राह्मणत्वाद्यभिमानः केनागच्छतीति सम्यग्विचार्यमाणे "लोके 'उत्सवः' इति 'कल्याणम्' इति 'सभा' इति 'सेना' इत्यनेकवस्तुसमूहस्य तत्तन्नाम्ना व्यवहारः प्रवर्तते। तथा मायामयस्यानिर्वचनीयस्य देहेन्द्रियादिसंघातस्यैव लोकव्यवहारेण केवलम् 'ब्राह्मणः' 'क्षत्रियः' 'वैश्यः' 'शूद्रः' 'स्त्री' 'पुरुषः' 'नपुंसकः' 'गुर्जरः' 'महाराष्ट्रकः' 'आन्ध्रः' 'कर्णाटकः' 'द्राविडः' 'शास्त्रीः' 'दीक्षितः' 'पौराणिकः' 'अवधानी' 'गङ्गास्नायी' 'शैवः' 'भागवतः' 'सेवकः' 'प्राधानिकः' 'राजा' 'मन्त्री' 'गुरुः' 'शिष्यः' इत्यादिसकलनामव्यवहारः। कालत्रयेऽप्यात्मनो नामरूपव्यवहारो नास्ति।" इत्येकरूपविचाराकरणमेवाविवेकः। अनेनैवाविवेकेन सर्वेषामात्मनि-वर्णाश्रमाद्यभिमान आगच्छति ।।

अयमविवेकः केनागच्छतीति चेत्, स्वस्य निजस्य चिदात्मरूपस्यानादिकालमारभ्य आवारकमात्मज्ञानैकापनोद्यं यदनाद्यज्ञानं तदेव कारणम्। इदमेवाज्ञानम् 'मामहं न जानामि' इति व्यवह्रियते। ननु लोके भ्रान्तमेकं विना को वा आत्मानं न जानातीति चेत्, सर्वे भ्रान्ता एव। तत्कथमिति चेत् 'अहं ब्राह्मणः' अहं क्षत्रियः' 'अहं वैश्यः' 'अहं शूद्रः' 'अहं ब्रह्मचारी' 'अहं गृहस्थः' इत्यादिरूपेण मिथ्याभूतमिमं देहमेव सर्वे जानन्ति। शरीरव्यतिरिक्तमात्मानं कोऽपि न जानाति। अतः सर्वे भ्रान्ता एव ।।

ननु लोके केचिच्छास्त्रज्ञाः पौराणिकाश्च देहमनात्मत्वेन मन्यमाना घटकुण्ड्यसंनिभं देहं विहायान्यमेवात्मानं जानन्ति; हे स्वामिन्, भवद्भिः 'आत्मानं न कोऽपि जानन्ति' इति कथमुच्यत इति चेत्। हे पुत्र तेऽपि पारमार्थिकमात्मानं न जानन्ति। किं तु

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

कर्तारं भोक्तारं परिच्छन्नं लोकान्तरगामिनं चिदाभासरूपं व्यावहारिकं जीवात्मानमेवात्मत्वेन जानन्ति। तं विना अकर्तारमपरिच्छिन्नमचलं चिद्रूपं पारमार्थिकमात्मानं न जानन्ति ॥

इदमज्ञानं केनागतमिति चेत्, अस्यानादित्वेन वेदेषु शास्त्रेषु च प्रसिद्धत्वात्कारणं वक्तुं न शक्यते। तर्हि तस्याज्ञानस्यादिर्नास्ति चेदन्तोऽपि नास्तीति निश्चयः; तथा चेज्जीवस्य मुक्तिरपि न स्यादिति चेत्, शृणु। अज्ञानस्य आदेरभावेऽप्यन्तोऽस्त्येव। लोके केषांचित्पदार्थानामादेरभावेऽप्यन्तोऽस्ति। केषांचिदन्ताभावेऽप्यादिरस्ति। तत्कथमिति चेत्। प्रागभावस्यादिर्नास्ति, अन्तोऽस्ति। प्रध्वंसाभावस्यान्तो नास्ति, आदिरस्ति। किं च वातपित्तश्लेष्मजन्यव्याधेर्मूलाज्ञानेऽपि वैद्यकशास्त्रोक्तौषधैर्यथा निवृत्तिर्दृश्यते, तथाऽज्ञानस्य मूलाज्ञानेऽपि वेदान्तशास्त्रोक्तवाक्यजन्यज्ञानेन नाशो भवतीति सिद्धान्तः। अस्याज्ञानस्य स्वरूपलक्षणं किमिति चेत्, तद्दुर्वचम्। तथा हि—तदज्ञानं न सत्, नासत्, नापि सदसत्; न सावयवम्, न निरवयवम्, नोभयात्मकम्; न भिन्नम्, नाभिन्नम्, न भिन्नाभिन्नम्; किं त्वनिर्वचनीयम्। तत्कथमिति चेत्। तत्त्वज्ञानेन बाधितत्वान्न सत्। शशविषाणनरविषाणगगनारविन्दादिवन्नाप्यसत्, 'अहमज्ञः' इति सर्वैरनुभूयमानत्वात्। नापि सदसत्, परस्परविरोधात्। स्थूलाकाशः सूक्ष्मः; तस्मादपि सूक्ष्मोऽपञ्चीकृत आकाशः; तस्मादपि सूक्ष्मा गुणाः; तेभ्योऽपि सूक्ष्ममज्ञानम्; तस्मात्सूक्ष्मस्यापि मूलकारणत्वादज्ञानं न सावयवम्। स्थूलपदार्थजगदाकारेण परिणामान्न निरवयवम्। अन्योन्यविरोधान्नोभयात्मकम्। आत्मनो भिन्नमिति चेदद्वैतश्रुतिविरोधादात्मसत्ताव्यतिरिक्तसत्ताऽभावाच्च न भिन्नम्। अभिन्नमिति चेदात्मशक्तित्वाभावप्रसङ्गात् 'पराऽस्य शक्तिर्विविधैव श्रूयते' इति श्रुतिविरोधाच्च तदपि न सम्भवति; किं च आत्मनो जडत्वं मायाया वा चेतनत्वं स्यात्,

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

आत्मनोऽविद्यादिनाम्ना च भवितव्यम्, आत्मनः सच्चिदानन्दस्वरूपस्यानृतजडदुःखत्वमपि स्यात्; तस्मान्नाभिन्नम्। भिन्नाभिन्नयोर्विरोधान्नोभयात्मकम्। तस्मादज्ञानमनिर्वचनीयमेव ॥

एवंभूतादनादेरज्ञानादविवेकः, तस्मादभिमानः, तस्माद्रागद्वेषादिः, तेन कर्म, कर्मणा शरीरम्, तस्माद्दुःखं सांसारिकमात्मनोऽज्ञानात्परम्परया भवतीति ज्ञातव्यम्। तर्ह्येतद्दुःखं कदा गमिष्यतीति चेत्, शरीरे गते सति दुःखं गमिष्यति। शरीरं च कर्मणि नष्टे सति नश्यति। कर्म च रागद्वेषादौ नष्टे सति नश्यति। रागद्वेषादिश्चाभिमाने नष्टे सति नश्यति। अभिमानश्चाविवेके नश्यति सति नश्यति। अविवेकश्चाज्ञाने नश्यति सति नश्यति। अज्ञानं चाद्वैतब्रह्मस्वरूपस्यात्मनः स्वस्य दृढनिश्चयरूपेण 'ब्रह्मैवाहम्', 'अहं ब्रह्मैवास्मि' इति महावाक्यजन्यज्ञानेन विनश्यति नान्येनेति ज्ञातव्यम् ॥

ननु ब्रह्महत्यादिमहापातकान्यपि प्रायश्चित्तरूपसत्कर्मभिर्निःशेषं नश्यन्ति; तादृशकर्मशक्त्याऽल्पं मिथ्याभूतमिदमज्ञानं किमिति न गच्छेदिति चेत्। कर्मणोऽज्ञानस्य च विरोधो नास्ति। कर्म अज्ञानं वर्धयति। यथा अमावास्यान्धकारं मेघावरणं वर्धयति, तथा कर्म अज्ञानं वर्धयति, न निवर्तयति। तमन्धकारं यथा सूर्यो निवर्तयति तथा अज्ञानं ज्ञानमेव निवर्तयेत्, न कर्म ॥

ननु त्रिविधकरणजन्यं कर्म हि; ज्ञानस्याप्यन्तःकरणजन्यवृत्तित्वेन कर्मत्वात्तत्कथमज्ञानं नाशयेदिति चेत्, शृणु। सत्यं वृत्तिर्मानसं कर्मैव। सा वृत्तिर्ज्ञानस्याज्ञाननिवर्तनेन रूपग्रहणे नेत्रवदुपाधिभूतैव न स्वयं निवर्तिका। ज्ञानं तु निवर्तकं नित्यम्। तज्ज्ञानं स्वरूपज्ञानं वृत्तिज्ञानमिति द्विविधम्। तत्र सुषुप्तावज्ञानप्रकाशकं ज्ञानं स्वरूपज्ञानम्। जाग्रत्स्वप्नयोर्विषयप्रकाशकं वृत्ति-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

ज्ञानम् यथा आदित्येन प्रकाश्यमाने कुडयेऽनेकदर्पणादित्यदीप्तयश्च तासां मध्ये मध्ये खादित्यदीप्तिश्च, तथा जाग्रत्स्वप्नयोर्वृत्तिज्ञान-प्रकाशाः सुषुप्तौ स्वरूपज्ञानप्रकाशश्चेति ज्ञेयम् ॥

तर्हि जाग्रत्स्वप्नयोः स्वरूपज्ञानं नास्ति किमिति चेत् । स्वरूप-ज्ञानं सर्वदा सर्वास्ववस्थास्वप्यस्ति । वृत्तयः सुषुप्तौ न सन्ति । वृत्तयः सर्वा अप्यन्तःकरणधर्माः । ज्ञानमात्मस्वरूपम् । तत्स्वरूपभूतं ज्ञानं वृत्तिषु प्रविश्याज्ञानं नाशयति । केवला बुद्धिवृत्तिरज्ञानं नाशयितुं नेष्टे । तस्मादात्मनोऽज्ञानमप्यात्माकारवृत्तिप्रविष्टेन स्व-रूपज्ञानेनैव विनाश्यं न बुद्धिवृत्त्या । न कर्मकोटिसहस्रेणापि विनाश्यम् । यथा सत्कर्मैव पापकर्म नाशयति, एवं वृत्तिज्ञान-मेवाज्ञानं नाशयति । यथा माणिक्यं शिलारूपमपि प्रकाशयुक्तत्वेन रत्नदीपमिति व्यवह्रियते, एवं वृत्तिज्ञानस्यापि मनोवृत्तिरूपत्वेऽपि स्वप्रविष्टस्वरूपज्ञानयुक्तत्वाज्ज्ञानमिति व्यवहारो गौणः, न कर्मेति व्यवहारः ॥

ननु सुषुप्तौ स्वरूपज्ञानस्याज्ञानप्रकाशकत्वेन विरोधाभावा-त्कथं ज्ञानमज्ञानं नाशयेदिति चेत्, स्वरूपज्ञानस्याज्ञानेन विरोधा-भावेऽपि वृत्तिज्ञानस्याज्ञानेन विरोधोऽस्ति । वृत्तौ प्रविष्टस्यापि ज्ञानस्य स्वरूपज्ञानत्वात्कथमज्ञानेन विरोध इति चेत्, लोके तृणादेः प्रकाशकत्वेनादित्यकिरणस्य तेन विरोधाभावेऽपि सूर्य-कान्तप्रविष्टस्य तस्यैव यथा तृणादिदाहकत्वेन तेन विरोधः, तथा स्वरूपज्ञानस्य केवलास्याज्ञानेन विरोधाभावेऽपि वृत्तिप्रविष्टस्य तस्याज्ञानेन विरोधोऽस्ति ॥

ननु वृत्तिज्ञानेनाज्ञानतत्कार्यनाशेऽपि वृत्तेस्तत्प्रविष्टज्ञान-स्यापि विद्यमानत्वात्कथमद्वैतं सिध्येदिति चेत्, कतकरजोन्यायेन वृत्तिज्ञानमप्यज्ञानं तत्कार्यं च निवर्त्य स्वमपि स्वयमेव निवर्तयेत् ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

वृत्तिनाशे सति वृत्तौ प्रतिबिम्बतं ज्ञानमपि बिम्बभूतं स्वरूपज्ञानमेवाधिगच्छति। ततोऽद्वैतमात्मस्वरूपमेवावशिष्यते। एवं ज्ञानेनैवाज्ञानस्य विनाशः॥

एवंभूतं ज्ञानमात्मविचारेणैवागच्छति न तु कर्मभिर्न योगेन नोपासनया वा। ज्ञानं वस्तुतन्त्रम्, अत एव कर्तुमकर्तुमन्यथाकर्तुमशक्यम्। उपासना योगश्च पुरुषतन्त्रत्वात्कर्तुमकर्तुमन्यथाकर्तुं शक्यौ। ताभ्यां चित्तैकाग्र्यमणिमाद्यष्टैश्वर्यं च साध्यते, न तु ज्ञानम्। उपासनायोगौ मनोव्यापाररूपत्वात्क्रियात्मकौ न वस्तुतन्त्रौ। तस्माद्वस्तुतन्त्रं ज्ञानं कर्मणा नायाति; किं तु विचारेणैव साध्यम्। सालिग्रामो रत्नं सुवर्णमित्यादिवस्तुनिर्णयो लक्षणपरीक्षाभ्यां निघर्षणेन च कर्तव्यः, न तु स्नानसंध्यावन्दनप्राणायामादिना कस्यापि साध्य इति निर्णयः। एवमात्मज्ञानमप्यात्मानात्मविचारं विनोपासनादिभिः साधयितुं न शक्यते। तस्मान्मुमुक्षुरितरव्यापारं विहाय श्रवणमननाभ्यां सदा आत्मानात्मविचारमेव कुर्यात्। य एवं तदेकपरः सोऽस्मिन्नेव जन्मनि संसारबन्धाद्विमुक्तः सन् जीवन्मुक्तिं विदेहमुक्तिं च प्राप्नोतीति सकल वेदान्ता घोषयन्ति। एवं मयोक्तं हे पुत्र, त्वं विश्वासेन गृहीत्वा चिन्मात्रेण तिष्ठ, न तु कदाचिदपि कर्तृत्वादिरूपेण तिष्ठ॥

॥ इति षष्ठवर्णकम् ॥

## ॥ सप्तमवर्णकम् ॥

इतः परं सप्तमवर्णके आत्मानात्मविवेकस्तत्साध्यमात्मज्ञानं तत्साध्यं ब्रह्मकैवल्यं च कथ्यते। आत्मानात्मविवेकेनात्मज्ञानं जायत इति खलूक्तम्। स आत्मा क इति चेत्, शृणु। आत्मा

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

शरीरत्रयविलक्षणोऽवस्थात्रयसाक्षी पञ्चकोशव्यतिरिक्तः सच्चिदानन्दलक्षणः। अनात्मा तु शरीरत्रयम्। तस्य किं लक्षणमित्युक्तेऽनृतजडदुःखरूपत्वम्। तच्च शरीरत्रयं व्यष्टिसमष्टयात्मकम्। व्यष्टिसमष्टिलक्षणं प्रथमवर्णके उक्तम्। अत्राप्युच्यते। वनमिव समष्टिः। वृक्ष इव व्यष्टिः। समस्तं समष्टिः। व्यस्तं व्यष्टिः। एवं शरीरत्रयमपि व्यष्टिसमष्ट्यात्मकम्। तत्कथमिति चेत्। समष्टिस्थूलशरीरं समष्टिसूक्ष्मशरीरं समष्टिकारणशरीरमिति च व्यष्टिस्थूलशरीरं व्यष्टिसूक्ष्मशरीरं व्यष्टिकारणशरीरमिति च शरीरत्रयमपि समष्टिव्यष्टिरूपेण षट्प्रकारम्। आत्मनः समष्ट्युपाधिनेश्वरत्वं व्यष्ट्युपाधिना जीवत्वम्। न तु वास्तवम्, आत्मन एकत्वात्। आत्मनो मायोपाधिनेश्वरत्वमविद्योपाधिना जीवत्वम्, न तु वास्तवम्। वास्तवमिति यावज्जानाति तावद्बन्धनिवृत्तिश्च नायाति। 'जीवेशावाभासेन करोति, माया चाविद्या च स्वयमेव भवति' इति सकलजीवमाया श्रुतिश्चैवमेवोपदिशति॥

ईश्वरस्य समष्टिकारणशरीरेऽभिमानो नास्ति। कुत इति चेत्, तदा महासुषुप्तावहंकारस्य लीनत्वेनाभिमानकारणाभावात्। अयं समष्टिकारणोपाधिक ईश्वरोऽव्याकृतोऽन्तर्यामीति चोच्यते। अयमुत्तमभक्तैर्जीवैरुपास्यते। अस्योपासनायामशक्तानां श्रुतिः समष्टिसूक्ष्मशरीरोपाधिकमीश्वरमुपास्यत्वेनोपदिशति। तस्य हिरण्यगर्भः सूत्रात्मा महाप्राण इति नामानि सन्ति। अस्यापि हिरण्यगर्भस्य सूक्ष्मशरीरेऽभिमानोऽस्ति वा न वेति चेत्, तदा अभिमानकर्तर्यहंकारे विद्यमानेऽपि स्वप्नावस्थानादभिमानाश्रयस्थूलशरीरप्रवेशाभावात्सूक्ष्मशरीरेऽप्यभिमान ईश्वरस्य नास्ति॥

अस्य सूक्ष्मोपाधेरीश्वरस्योपासनायामशक्ताज्जीवान्प्रति समष्टिस्थूलोपाधिकस्येश्वरस्योपासनां श्रुतिर्विधत्ते। तस्येश्वरस्य विराड्-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

वैराजो वैश्वानर इति नामानि सन्ति। अस्याप्यस्मिन्स्थूलसमष्टिशरीरेऽभिमानोऽस्ति वा न वेति विचार्यमाणे, नास्ति। कथमिति चेत्, सकलजीवशरीराणामप्येकीभूयास्य शरीरत्वेनावस्थानात्, 'अहम्' इति व्यावर्तनीयप्रतियोग्यभावात् ॥*

एतत्समष्टिशरीरत्रयोपहितमीश्वरमुपासितुमशक्ताञ्जीवान्प्रति श्रुती राजससात्त्विकतामसमूर्तिसहितस्य सृष्टिस्थितिसंहारकर्तुर्ब्रह्मविष्णुरुद्रनामधेयस्य दुष्टनिग्रहशिष्टपरिपालनकृते मत्स्यकूर्माद्यवतारकर्तुरीश्वरस्योपासनां विधत्ते ॥

एवं ब्रह्मादिमूर्तिधरस्येश्वरस्य तत्तन्मूर्तावभिमानास्ति वा न वेति चेत्, अभिमानोऽस्ति। अभिमानाभावे तत्तन्मूर्त्या सृष्ट्यादिकार्यं कर्तुं न शक्यते। अतोऽभिमानोऽस्ति। एवमीश्वरस्यापि जीववदभिमाने सति जीवादीश्वरस्य को विशेष इति चेत्, विशेषोऽस्ति। कथमिति चेत्, जीवानां स्वस्वदेहेष्वहंता च ममता च सततमस्ति। ईश्वरस्य तु स्वमूर्त्यभिमानः कृपया लोकरक्षणार्थं तत्तत्कार्यसमय एवेश्वरेण केवलं कल्प्यते नटेन स्वभूमिकायामिवेत्ति जीवाभिमानस्येश्वराभिमानस्य चास्ति महान्भेदः ॥

मूर्तिस्वरूपमीश्वरमप्युपासितुमशक्तानां शास्त्रं मूर्तिरूपेण कल्पितताम्रादिप्रतिमोपासनं विधत्ते। अत एव प्रतिमां केचिदीश्वरबुद्ध्योपासते। सर्वत्र ब्रह्मादिमूर्तिष्वपि तत्तत्प्रतिमास्वपि चान्तर्यामी परमेश्वर एक एव स्थित्वा तेषां तेषामुपासकानां फलं ददाति। मूढो ईश्वरस्य सर्वात्मकत्वमविचार्य तत्र तत्रेश्वरा बहवो भिन्नभिन्नतया वर्तन्त इति मत्वा अन्योन्यं कलहायन्ते। तस्मादन्तर्यामीश्वर एक एवेति जानीहि। तर्हि सर्वत्रेश्वरस्यैकत्वे शास्त्रमपि तत्तन्मूर्तिभेदमङ्गीकृत्य तत्तदुपासनाभेदं कथं विधत्त

* [परिच्छेदद्वयोर्वर्णितं अभिमानराहित्यं वेदान्तसम्प्रदायविरुद्धं, अतोऽयं अपसिद्धान्तः—सं०]

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

इति चेत्, बहिर्मुखानपि शनैः शनैरन्तर्मुखान्कृत्वा 'परमात्मैव जीवात्मा, नान्यः' इति बोधयित्वा तेषां मुक्ति दातुमेवानादि-कालमारभ्य प्रवृत्तं भेदमङ्गीकृत्य तेषां बुद्धिमनुसृत्य भेदेन शास्त्र-मुपासनां विधत्ते न तु तात्पर्येण एवमीश्वरस्य परमात्मनः समष्टि-शरीरत्रयोपाधिनेश्वरत्वसिद्धिप्रकार उक्तः ॥

अथेदानीमेकस्यैव परमात्मनो व्यष्टिशरीरत्रयोपाधिना जीव-त्वसिद्धिप्रकार उच्यते। व्यष्टिकारणशरीरोपहितस्य परमात्मन एव 'प्राज्ञः' 'पारमार्थिकः' 'अविद्यावच्छिन्नः' इति नामानि सन्ति; व्यष्टिसूक्ष्मशरीरोपहितस्य परमात्मनः 'तैजसः' 'स्वप्नकल्पितः' 'प्रातिभासिकः' इति नामानि सन्ति; व्यष्टिस्थूलशरीरोपहितस्य परमात्मनः 'विश्वः' 'व्यावहारिकः' 'चिदाभासः' इति नामानि सन्तीति जानीहि ॥

अस्य जीवस्य शरीरत्रयमपि किमर्थमिति चेत्, प्रयोजनमस्ति। अन्तःकरणप्रतिबिम्बो हि जीवः। अतो जीवस्य सूक्ष्मशरीरं प्रथममावश्यकम्। पश्चात्स्थूलशरीरं विना कर्मकर्तृत्वाभावात्स्थूल-शरीरमप्यावश्यकम्। इदं कार्यशरीरद्वयमपि कारणशरीरं विना अवस्थातुमशक्यम्। अतः कारणशरीरमप्यावश्यकम्। एवं जीवस्य व्यष्टिशरीरत्रयमप्यावश्यकम् ॥

अस्य जीवस्यास्मिन्व्यष्टिशरीरत्रयेऽभिमानोऽस्ति वा न वेति विचार्यमाणे, अभिमानोऽस्ति। कथमिति चेत्, जीवस्य कर्मकर्तृ-त्वेन। शरीराभिमानाभावे जीवस्य तत्कर्मकर्तृत्वं नोपपद्यते। तदभावे शरीरमपि नोपपद्यते। शरीराभावे जीवत्वमेव न संभवति। तस्माज्जीवस्याभिमानोऽस्ति। एवं परमात्मैक एव व्यष्टि-समष्ट्युपाधिभ्यां जीवेश्वरभावं गतः। अस्य दृष्टान्तोऽस्ति वेत चेत्, अस्ति। यथैकस्यैव देवदत्तस्य पुत्रपौत्रोपाधिभ्यां पितेति पितामह

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

इति च नामद्वयमस्ति, तथा अविद्यामायोपाधिभ्यामात्मन एकस्यैव जीवत्वमीश्वरत्वं चागतम् ॥

ननु पूर्वोक्तो दृष्टान्तो जीवेश्वरनामद्वये युज्यते, किञ्चिज्ज्ञत्व-सर्वज्ञत्वादिविशिष्टभेदस्य को वा दृष्टान्त इति चेत्, दृष्टान्तोऽस्ति। एकमेव जलं बृहत्तटाकस्थं सदेकग्रामसंरक्षकं महाशक्तिमत् घटस्थं सदेकगृहसंरक्षकमल्पशक्तिमद्यथा जातम्, अग्निरेक एव स्थूल-महावर्तिस्थः सन्बहुदूरप्रकाशको महाशक्तिमान् अल्पवर्तिस्थः सन्गृहमात्रप्रकाशकोऽल्पशक्तिमान्यथा च जातः, तथा आत्मनोऽपि बृहता कारणभूतमायोपाधिना सर्वज्ञत्वम् अल्पेन कार्यभूताविद्यो-पाधिना किञ्चिज्ज्ञत्वं चागतम्। न तु सर्वज्ञः किञ्चिज्ज्ञ इत्यात्म-द्वयमस्ति। अत एव वेदान्तशास्त्रं च तत्पदस्य त्वंपदस्य च सम्बन्धत्रयेणाखण्डं बोधयति ॥

संबन्धत्रयं किमिति चेत्—पदयोः सामानाधिकरण्यसंबन्धः, पदार्थयोर्विशेषणविशेष्यभावसंबन्धः, पदाभ्यां सह वा पदार्थाभ्यां सह वा प्रत्यगात्मनो लक्ष्यलक्षणभावसंबन्धः। एवं संबन्धत्रयम्। तस्य दृष्टान्तः—'सोऽयं देवदत्तः' इत्यत्रेदं संबन्धत्रयमस्ति। सशब्दस्यायं-शब्दस्य चैको देवदत्तपिण्ड एव समानमधिकरणमिति तयोः शब्दयोः सामानाधिकरण्यसंबन्धोऽस्ति। तथा तत् पदस्य त्वंपदस्य चैकमेव चैतन्यं समानमधिकरणम्। तस्मात्पदद्वयस्यापि सामाना-धिकरण्यसंबन्धोऽस्ति। तत्कालतद्देशविशिष्टदेवदत्तवाचकसशब्दार्थ-स्यैतत्कालैतद्देशविशिष्टदेवदत्तवाचकायंशब्दार्थस्य चान्योन्यभेद-व्यावर्तकत्वेनान्योन्यं विशेषणविशेष्यभावसंबन्धोऽस्ति। तथा सर्व-ज्ञत्वपरोक्षत्वादिविशिष्टचैतन्यवाचकतत्पदार्थस्य किञ्चिज्ज्ञत्वादि-विशिष्टचैतन्यवाचकत्वंपदार्थस्य चान्योन्यभेदव्यावर्तकत्वेनान्योन्यं विशेषणविशेष्यभावसंबन्धोऽस्ति। सोऽयंपदयोस्तत्पदार्थयोर्वा अख-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

पदार्थदेवदत्तपिण्डमात्रग्रहणे विरुद्धांशं विहायाविरुद्धांशभूतदेवदत्त-मात्रलक्षकत्वेन लक्ष्यलक्षणभावसंबन्धोऽस्ति। तथा तत्त्वंपदयोस्त-त्पदार्थयोर्वा अखण्डसच्चिदानन्दमात्रग्रहणे विरुद्धांशं विहाया-विरुद्धांशभूतचैतन्यमात्रलक्षकत्वेन लक्ष्यलक्षणभावसंबन्धोऽस्ति ॥

इममेव लक्ष्यलक्षणभावसंबन्धं भागत्यागलक्षणेति जहद-जहल्लक्षणेति च जानीति। तत्कथमिति चेत्। शास्त्रेषु वाक्यार्थ-ग्रहणे मुख्यवृत्तिर्गुणवृत्तिर्लक्षणावृत्तिश्चेति वृत्तित्रयमस्ति। 'राजा गच्छति' इति वाक्यार्थे मुख्यवृत्तिः। 'नीलमुत्पलम्' इति वाक्यार्थे 'अग्निर्माणवकः' इत्यादौ च गुणवृत्तिः। लक्षणावृत्तिश्च त्रिविधा जहल्लक्षणा-अजहल्लक्षणा जहदजहल्लक्षणा चेति। 'गङ्गायां घोषः प्रतिवसति' 'शोणो धावति' 'सोऽयं देवदत्तः' इति च क्रमेण लक्षणा-वृत्तित्रयस्योदाहरणवाक्यानि। एतेषु मुख्यार्थग्रहणे विरोधाल्लक्षणा-वृत्तिरङ्गीकृतेति ज्ञेयम्।

तत्त्वंपदयोर्वाच्यार्थः को लक्ष्यार्थश्च क इति चेत्, उच्यते। माया मायाप्रतिबिम्बो मायाधिष्ठानं ब्रह्म चैतत्त्रयमप्येकीभूय तत्पदवाच्यार्थः। ब्रह्ममात्रं तत्पदलक्ष्यार्थः। अविद्याऽविद्याप्रति-बिम्बोऽविद्याधिष्ठानं साक्षिचैतन्यं चैतत्त्रयमप्येकीभूय त्वंपदवा-च्यार्थः। साक्षिकूटस्थचैतन्यमात्रं त्वंपदलक्ष्यार्थः। तस्मात्तत्त्वंपद-वाक्यार्थग्रहणे वाच्यार्थजीवेश्वरयोर्विरोधात्तयोर्विरुद्धांशं विहाया-विरुद्धांशस्य ब्रह्मचैतन्यस्य कूटस्थचैतन्यस्य चैकत्वाद्ब्रह्मकूटस्थौ लक्षयित्वाऽखण्डार्थस्तयोरैक्यमेव महावाक्येन बोध्यते। यथा पुत्रपौत्रो-पाधिद्वयपरित्यागे पितृपितामहत्वाभावेनैको देवदत्त एवावशिष्यते, महातटाकघटोपाधिपरित्यागे शैत्यद्रवमधुरस्वभावं जलमेकमेवा-शिष्यते, महावर्त्यल्पवर्तिपरित्यागे लोहितोष्णप्रकाशस्वभावो वह्नि-रेक एवावशिष्यते, तथा मायाऽविद्योपाधिपरित्यागे सच्चिदानन्द-स्वभावमेकमात्मवस्त्वेवावशिष्यते ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

एवं विचार्थं 'परिपूर्णस्वभावः प्रत्यगात्मैव मम स्वरूपम्, अहं ब्रह्मास्मि, ब्रह्मैवाहमस्मि' इत्यनुभवो यस्य महानुभावस्यागच्छति स एव कृतकृत्यः स एव ब्राह्मण इति सर्वे वेदान्ता भेरीवाद्यवदुद्घोषयन्ति।

॥ इति सप्तमवर्णकम् ॥

## अष्टमवर्णकम्

इतः परमात्मनः पूर्वोक्तशरीरत्रयविलक्षणत्वमवस्थात्रयसाक्षित्वं पञ्चकोशव्यतिरिक्तत्वं सच्चिदानन्दस्वरूपत्वं च चत्वारि लक्षणानि क्रमेण चतुर्भिर्वर्णकैरुच्यन्ते। एतेषु शरीरत्रयविलक्षणत्वं पञ्चकोशव्यतिरिक्तत्वं चातद्व्यावृत्तिलक्षणम्, अवस्थात्रयसाक्षित्वं तटस्थलक्षणम्, सच्चिदानन्दस्वरूपत्वं स्वरूपलक्षणम्। तथा आकाशादिशरीरत्रयान्तं दृश्यजातं 'नेति नेति' इति वाक्येन विहायावशिष्टं वस्त्वात्मेत्यतद्व्यावृत्तिलक्षणम्, अस्य प्रपञ्चस्य यदधिष्ठानं तदात्मवस्तु' इति तटस्थलक्षणम्, 'सच्चिदानन्दः पूर्णं नित्यमात्मवस्तु' इति स्वरूपलक्षणम् ॥

अस्मिन्नष्टमवर्णके शरीरत्रयविलक्षणत्वमुच्यते। शरीरत्रयस्याज्ञाने तद्विलक्षणत्वमपि दुर्विज्ञेयमिति प्रथमतः शरीरत्रयमुच्यते। स्थूलं सूक्ष्मं कारणमिति शरीरं त्रिविधम्। तत्र सर्वेषां प्रत्यक्षं करचरणाद्यवयवोपेतं स्तम्भवद्वर्तमानं यत् तत्स्थूलशरीरम्। सप्तदशावयवकं सूक्ष्मशरीरम्। अज्ञानमेव कारणशरीरम्। एतेषां शीर्यते क्षीयत इति व्युत्पत्त्या शरीरमिति नाम। तथा हि इदं स्थूलशरीरमन्नाभावे शीर्यते, अन्ने विद्यमानेऽपि व्याधिना शीर्यते,

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तदभावेऽपि वय:परिणामेन शीर्यते। पल्लवमिव सूक्ष्मशरीरमपि कदाचिद्वर्धते कदाचित्क्षीयते। रागाद्वेषाद्यन्तःकरणवृत्तिविजृम्भण-मेव सूक्ष्मशरीरस्य वृद्धिः, तासां संकोच एव जीर्णता। कारण-शरीरस्यापि 'अहं जीवाः' इति वृद्धिः, 'अहं ब्रह्मास्मि' इति संकोचः। अनयोः सूक्ष्मकारणशरीरयोरुक्तरूपा वृद्धिरज्ञानिषु दृश्यते, संकोचश्च ज्ञानिषु दृश्यते। एवं शरीरत्रयस्यापि जराया दर्शनेन 'शरीरम्' इति नाम। एतेषां 'देहः' इति नाम च 'दह्यते' इति व्युत्पत्त्या आगतम् ॥

ननु लोके सर्वोऽपि स्थूलदेहोऽग्निना दह्यते, सूक्ष्मशरीरं कारण-शरीरं च न कदाचिदप्यग्निना दह्यते, तत्कथमिति तेषां देहत्वमिति चेत्—अग्नेरप्यधिकेन तापत्रयेण सर्वमपि शरीरं दह्यते; अतः शरीरत्रयस्यापि देह इति नाम युज्यते। स्थूलशरीरस्य स्तम्भ-वत्स्थूलभूतकार्यत्वेन स्थूलत्वम्। सूक्ष्मशरीरस्य स्थूलशरीवत्स्थूल-त्वाभावात्सूक्ष्मभूतजन्यत्वाच्च सूक्ष्मत्वम्। लीनं शब्दाद्यर्थं गमयतीति 'लिङ्गम्' इत्यपि नामास्यागतमिति ज्ञेयम्। स्थूलसूक्ष्मशरीरद्वय-कारणस्य कारणशरीरमिति नाम ॥

हे स्वामिन्, पूर्वं स्थूलं सूक्ष्ममिति शरीरद्वयमपि पञ्च-भूतेभ्य उत्थितमित्युक्तम्, इदानीं कारणशरीरादुत्थितमिति कथमुच्यत इति चेत्, शृणु। अध्यारोपसृष्टौ तथा पञ्चभूतोत्थित-मित्युक्तम्। तत्तथैव। आत्मनः शरीरतत्त्वेऽज्ञानं कारणमिति युग-पत्सृष्टौ सर्वस्यापि जगतोऽज्ञानमेव कारणमिति कृत्वा शरीरद्वय-स्याप्यज्ञानमेव कारणमित्युक्तम् ॥

कथं क्रमसृष्टिः कथं युगपत्सृष्टिरिति चेत्, उच्यते। मूल-प्रकृतिर्माया अविद्या आवरणं विक्षेप आकाशो वायुरग्निरापः पृथिवीति क्रमेणोत्पत्तिकथनं क्रमसृष्टिः। सर्वोऽपि प्रपञ्च आत्मा-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

ज्ञानेन जात इति कथनं युगपत्सृष्टिः। ननु स्थूलस्य प्रत्यक्षेणानुभूयमानत्वात्तत्र न संदेहः; सूक्ष्मशरीरस्य बहिरप्रतीतेस्तदस्तीति ज्ञानं कथं जायत इति चेत्, शृणु। सप्तदशकरणकार्यैस्तत्सूक्ष्मशरीरं ज्ञातुं शक्यम्। तत्सप्तदशकरणकार्यमपि स्थूलशरीरेण कर्तुं न शक्यते वेति चेत्, सुषुप्तिमूर्च्छामरणेषु स्थूलशरीरे विद्यमानेऽपि सप्तदशकरणकार्याणामदर्शनाज्जाग्रत्स्वप्नयोस्तत्कार्यदर्शनाच्च। स्थूलशरीरव्यतिरेकेण सप्तदशावयवात्मकं लिङ्गशरीरमस्त्येवेत्यवगन्तव्यम् ॥

इदं सूक्ष्मशरीरमपि स्थूलशरीरं विना न कदापि कार्यं करोति, अत उभयमपि दर्शनादिकार्यं करोत्विति चेत्, शृणु। विवेकेन विचार्यमाणे दर्शनादिकार्यं सकलमपि सूक्ष्मशरीरसाध्यमेव, न तु स्थूलसाध्यम्। कथमिति चेत्। काष्ठमाश्रित्याग्निदाहपाकादिकर्म करोति, काष्ठाभावे न करोति; तथाप्यग्निकार्यमेव दाहपाकादि, न तु काष्ठकार्यं यथा; तथा स्थूलशरीरमाश्रित्य तेन सूक्ष्मशरीरेण क्रियमाणमपि दर्शनादिकं सूक्ष्मकार्यमेव, न तु स्थूलकार्यम्। अतो दर्शनादिकार्येणानुमेयं सप्तदशावयवकं सूक्ष्मशरीरमित्युक्तम्। ज्ञानेन्द्रियपञ्चकं कर्मेन्द्रियपञ्चकं प्राणपञ्चकं मनो बुद्धिश्चेति सप्तदशावयवाः। एतत्सप्तदशकं सूक्ष्मशरीरम् ॥

श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानि ज्ञानेन्द्रियाणि। शब्दस्पर्शरूपरसगन्धा एतेषां विषयः। तेषां ज्ञानसाधनत्वाज्ज्ञानेन्द्रियत्वम्। सुखप्रकाशाभिव्यञ्जकसत्त्वगुणकार्यत्वादेतेषां ज्ञानसाधनत्वम्। वाक्पाणिपादपायूपस्थाः कर्मेन्द्रियाणि। वचनादानगमनविसर्गानन्दनरूपक्रियासाधनत्वम् तेषां कर्मेन्द्रियत्वम्। चञ्चलमलिनरजोगुणकार्यत्वेनैतेषां क्रियासाधनत्वम्। प्राणापानव्यानोदानसमानाः प्राणाः। त उच्छ्वासनिश्वासादिव्यापारैः शरीरधारकत्वाद्बल-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

प्रदत्वाच्च प्राणसंज्ञाः। तादृशसामर्थ्यं च तेषां रजोगुणजन्यत्वादिति ज्ञेयम्। विमर्शात्मकान्तःकरणवृत्तिर्मनः। निश्चयात्मकान्तःकरण-वृत्तिर्बुद्धिः एवं सूक्ष्मशरीरस्य सप्तदशावयवाः॥

लोक एकस्मिन्वस्तुनि ज्ञातव्य उद्देशो लक्षणं परीक्षा चेत्यु-पायत्रयमस्ति। तत्र वस्तुनामग्रहणमात्रमुद्देशः। वस्तुस्वरूपग्रहणं लक्षणम्। वस्तुस्वरूपविचारः परीक्षा। सप्तदशावयवनामग्रहणे-नोद्देशो जातः। इतः परं लक्षणं परीक्षां च वदामः। लक्षणं नामा-व्याप्त्यतिव्याप्त्यसंभवरूपदोषत्रयरहितोऽसाधारणधर्मः। लक्ष्यैकदेशे लक्षणस्यावर्तनमव्याप्तिः। यथा कपिला गौरिति। अलक्ष्येऽपि लक्ष-णस्य वर्तनमतिव्याप्तिः। यथा चतुष्पाद्गौरिति। लक्ष्ये क्वापि लक्षणस्यावर्तनमसंभवः। यथैकशफा गौरिति दोषत्रयरहितो-ऽसाधारणधर्मो लक्षणं किमिति चेग्दोः सास्नादिमत्त्वम्॥

तद्वज्ज्ञानेन्द्रियाणां किं लक्षणमिति चेत्क्रमेण कथयिष्यामः॥

तत्र श्रोत्रेन्द्रियं किमिति चेत्, दिग्रूपाधिष्ठानदेवतया प्रेरितं सत्कर्णशष्कुल्यवच्छिन्ननभोदेशे स्थित्वा अष्टादशभाषाणां वेद-शास्त्राणां चेदमित्थमिति ज्ञातृ यदिन्द्रियं तच्छ्रोत्रम्। परीक्षा कीदृशीति चेत्कर्णशष्कुल्यवछिन्नं नभ एव जानात्विति चेत्सु-षुप्तिमूर्च्छादिसमयेऽपि कर्णशष्कुल्यवच्छिन्नं नभो विद्यमानमपि शब्दं न गृह्णाति; तस्मात्तदन्यदिति परीक्षा। त्वगिन्द्रियं किमिति चेत्, वायुरूपाधिष्ठानदेवतया प्रेरितं सत्त्वचं सर्वत्र व्याप्य शीतमुष्णं मृदु कठिनं कर्कशमित्यनेकविधं स्पर्शं यज्जानाति तत्त्व-गिन्द्रियम्। त्वगेव जानात्वित्युक्ते सुषुप्त्यादिषु त्वचि विद्यमाना-यामपि स्पर्शं न जानाति। तस्मात्सा न त्वगिन्द्रियम्। चक्षुरिन्द्रियं किमिति चेत्, सूर्यरूपाधिष्ठानदेवतया प्रेरितं सत्कृष्णताराग्र-माश्रित्य नीलं श्वेतं रक्तं पीतं हरितं धवलं स्थूलं सूक्ष्मं ह्रस्वं

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

दीर्घमित्युक्तबहुविधरूपं यज्जानाति तच्चक्षुरिन्द्रियम्। कृष्णताराग्रमेव जानात्विति चेत्, सुषुप्त्यादिषु तद्विद्यमानमपि न जानाति; तस्मान्न तच्चक्षुरिन्द्रियम्। रसनेन्द्रियं किमिति चेत्; वरुणरूपाधिष्ठानदेवतया प्रेरितं सद्रसनामाश्रित्य मधुरतिक्तलवणाम्लादीन्षड्रसान्यज्जानाति तद्रसनेन्द्रियम् रसनैव जानात्विति चेत्, सुषुप्त्यादिषु रसनामात्रं विद्यमानमपि रसं न जानाति; अतो न तद्रसनेन्द्रियम्। घ्राणेन्द्रियं किमिति चेत्, अश्विदेवतया प्रेरितं सन्नासाग्रमाश्रित्य सुगन्धं दुर्गन्धं च यज्जानाति तद्घ्राणेन्द्रियम्। नासाग्रमेव जानात्विति चेत्, सुषुप्त्यादौ विद्यमानमपि सन्नासाग्रं गन्धं न जानाति; तस्मान्न तद्घ्राणेन्द्रियम्। एवं ज्ञानेन्द्रियलक्षणानि ॥

इतः परं कर्मेन्द्रियलक्षणमुच्यते। अग्निरूपाधिष्ठानदेवतया प्रेरितं सत्तालुमूलमुत्तराधरोष्ठं दन्तं कण्ठं हृदयं नाभिमेवमादिस्थानान्याश्रित्य पूर्वोक्तशब्दभेदान्यदुच्चरति तद्वागिन्द्रियम्। सुषुप्त्यादौ ताल्वादिस्थानं विद्यमानमप्यक्षराणि नोच्चरति। तस्मान्न तद्वागिन्द्रियम्। इन्द्ररूपाधिष्ठानदेवतया प्रेरितं सत्करतलमाश्रित्यादानादिक्रिया यत्करोति तत्पाणीन्द्रियम्। सुषुप्त्यादौ विद्यमानमपि करतलं नादानादिक्रियाः करोति। अतो न तत्पाणीन्द्रियम्। उपेन्द्ररूपाधिष्ठानदेवतया प्रेरितं सत्पादतलमाश्रित्य गमनं यत्करोति तत्पादेन्द्रियम्। सुषुप्त्यादौ विद्यमानमपि पादतलं न गमनक्रियां करोति अतो न तत्पादेन्द्रियम्। मृत्युरूपाधिष्ठानदेवतया प्रेरितं सद्गुदमाश्रित्य यत्पुरीषविसर्जनादि करोति तत्पाय्विन्द्रियम्। सुषुप्त्यादौ विद्यमानमपि तन्न करोति। अतो न तत्पाय्विन्द्रियम्। प्रजापतिरूपाधिष्ठानदेवतया प्रेरितं सद्योनिलिङ्गमप्याश्रित्य शुक्रशोणितमूत्रविसर्जनं यत्करोति तदुपस्थेन्द्रियम्।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

सुषुप्तादौ योनिर्लिङ्गं च विद्यमानमपि तद्विसर्जनं न करोति। अतो न तदुपस्थेन्द्रियम्। एवं कर्मेन्द्रियलक्षणान्युक्तानि।

अथ प्राणपञ्चकस्य लक्षणमुच्यते। विशिष्टनामकाधिष्ठानदेवतया प्रेरितः सन्हृदये स्थित्वा य उच्छ्वासं करोति स प्राणः। विश्वसृष्टनामकाधिष्ठानदेवतया प्रेरितः सन्गुदे स्थित्वा यो निःश्वासं करोति सोऽपानः। विश्वयोनिनामकाधिष्ठानदेवतया प्रेरितः सन्नन्तर्बहिश्च शरीरे स्थित्वेन्द्रियाणां बलं यच्छन्यो वर्तते स व्यानः। अजनामकाधिष्ठानदेवतया प्रेरितः सन्कण्ठे स्थित्वा सुषुप्ताविन्द्रियाणां गोलकेषु लयं कारयित्वा जाग्रति पुनरिन्द्रियाणि गोलकेषु स्थापयित्वोत्क्रमणकाल इन्द्रियाणि गृहीत्वा लोकान्तरं गच्छति यो वायुः स उदानः। यो जयनामकाधिष्ठानदेवतया प्रेरितः सन्नाभिदेशे स्थित्वा भक्ष्यभोज्यचोष्यलेह्यरूपं चतुर्विधमन्नं जाठराग्नौ पाचयित्वा शरीरपुष्टिम् करोति स समानवायुः। एवं पञ्च प्राणः॥

नागः कूर्मः कृकरो देवदत्तो धनञ्जयश्च इत्यन्ये पञ्च वायवः श्रूयन्ते तेषामपि पूर्वप्रोक्तपञ्चप्राणेष्वन्तर्भावः। तत्र नागो वान्ति करोति। कूर्मउन्मीलननिमीलने अधरोष्ठयोः संयोगं विभागं च करोति। कृकरः क्षुतं करोति। देवदत्तो विजृम्भणं करोति। धनञ्जयः शरीरस्योच्छूनतां करोति॥

इतः परमन्तःकरणचतुष्टयं मनो बुद्धिरहंकारश्चित्तमिति जानीहि। अत्र मनश्चन्द्रेणाधिष्ठितं सत्कण्ठमाश्रित्य स्थित्वा संकल्पविकल्पौ करोति। बुद्धिश्चतुर्मुखेणाधिष्ठिता सति मुखमाश्रित्य स्थित्वा निश्चयं करोति। अहंकारो रुद्रेणाधिष्ठितः सन्हृदयमाश्रित्य स्थित्वा अभिमानं करोति। क्षेत्रज्ञरूपविष्णुनाधिष्ठितं सच्चित्तं नाभौ स्थित्वा अवधानं करोति। एतल्लिङ्गशरीरं काचि-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

च्छ्रुतिः षोडशात्मकं वदति। तस्मिन्पक्षेऽन्तःकरणमेकमिति जानीहि। पुनरन्या श्रुतिः सप्तदशात्मकं वदति। तस्मिन्पक्षे मनो बुद्धिरिति द्विविधमिति जानीहि। पुनरन्या श्रुतिरेकोनविंशत्यात्मकं वदति। तत्पक्षे मनो बुद्धिरहंकारश्चित्तमिति चतुर्विधमन्तः-करणमिति जानीहि। एवं लिङ्गशरीरनिर्णयः॥

इदानीं कारणशरीरमुच्यते। अज्ञानमेव कारणशरीरम्, स्थूलसूक्ष्मशरीरकारणत्वात्। अस्य जीवेश्वरयोः प्रथमशरीरत्वा-त्पश्चाद्भाविशरीरद्वयकारणत्वम्। तस्मिन्नर्थे प्रमाणं किमिति चेत्, अज्ञानं कारणमिति श्रुतिर्वदति। कार्येण कारणमूह्यत इति युक्तिः। 'अहमज्ञः' इत्यनुभवः॥

भोः स्वामिन्, आत्मा क इत्युक्ते शरीरत्रयविलक्षण इति बोधयितुं प्रथमतः शरीरत्रयं लक्षणैर्बोधितं किल? एवमेवात्मापि लक्षणैर्बोधयितव्य इति चेत् शृणु। सर्वत्र परिपूर्णं ब्रह्मेति तदेव ब्रह्म प्रत्यगात्मस्वरूपमिति च सकलोपनिषदो वदन्ति। तस्मा-दात्मा सच्चिदानन्दस्वरूप एवेति जानीहि। सत्किं चित्किमानन्दः किमिति चेत्—बाधरहितं सत्, स्वप्रकाशश्चित्, स्वानुभूतिरेवानन्द इति जानीहि। एवमात्मा सच्चिदानन्दस्वरूपः। अनात्मा त्वनृत-जडदुःखस्वरूपः॥

आत्मानात्मनोरन्योन्यवैलक्षण्यं कथं ज्ञातव्यमिति चेत्—यथा पुरुषलक्षणं स्त्रियां नास्ति स्त्रीलक्षणं पुरुषे नास्ति, एवमेव सल्ल-क्षणमनृते नास्त्यनृतलक्षणं सति नास्ति। यथा प्रकाशलक्षणमन्ध-कारे नास्त्यन्धकारलक्षणं प्रकाशे नास्ति, एवं चिल्लक्षणं जडे नास्ति जडलक्षणं चिति नास्ति। यथा चन्द्रिकालक्षणमातपे नास्त्यातपलक्षणं चन्द्रिकायां नास्ति, एवमानन्दलक्षणं दुःखे नास्ति दुःखलक्षणमानन्दे नास्ति।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सच्चिदानन्दानामनृतजडदुःखानां च लक्षणानि विस्तरेण ज्ञातव्यानीति चेत्, शृणु वदामः। कालत्रयेऽपि केनाप्यबाध्यमानमेकरूपं सत्। कालत्रयेऽपि मिथ्याभूतमपि सत्यमिव भासमानं विचार्यमाणे बाध्यमानमसत्। अस्य दृष्टान्तः—मदान्धकारे वर्तमाना रज्जुः स्वारोपितसर्पमाल्यदण्डजलधारादिभिरबाध्यमाना भ्रान्तेः पूर्वकाले पश्चात्काले भ्रान्तिकाले चैकरूपा वर्तते; अध्यस्तसर्पादि तु कालत्रयेऽपि स्वयं मिथ्याभूतमविद्यामानमपि विद्यमानमिव प्रतीयते, प्रमातुः परमार्थविचारेण बाध्यते च। एवंभूतरज्जुलक्षणं सर्पादौ नास्ति सर्पादिलक्षणं रज्जौ च नास्ति अतोऽन्योन्यं शब्देनार्थेन लक्षणेन प्रतीत्या व्यवहारेण च। पञ्चभिः प्रकारैर्वैलक्षण्यं यथा अनयोरस्ति, तथा सल्लक्षणमसल्लक्षणे देहादिप्रपञ्चे नास्ति, असल्लक्षणं च सल्लक्षणे प्रत्यगात्मनि नास्ति। तस्मादनयोरन्योन्यं शब्देनार्थेन लक्षणेन प्रतीत्या व्यवहारेण च पञ्चभिः प्रकारैर्वैलक्षण्यमस्ति। तस्मादेवं विचार्य सतोऽनृतस्य च वैलक्षण्यं जानीहि॥

इतः परं चितो जडस्य च वैलक्षण्यमुच्यते। सूर्यादिप्रकाशमनपेक्ष्य स्वप्रकाशेनैव प्रकाशमानं स्वारोपितस्य जडस्यापि प्रकाशकम्, अत एव सूर्यादिप्रकाशपदार्थं मृच्छिलाद्यप्रकाशपदार्थं च प्रकाशयति यद्वस्तु तच्चित्। जडलक्षणं कीदृशमिति चेत्, स्वयमप्रकाशमानमन्यपदार्थस्य च प्रकाशनेऽसमर्थं यत्तज्जडम्। अत्रोभयत्र दृष्टान्तः—यथा आदित्यः प्रकाशान्तरानपेक्षं स्वयमेव प्रकाशमानः सन्स्वप्रकाशसंबन्धिघटपटादिपदार्थमपि प्रकाशयति, तथा चित्प्रकाशः; यथा घटादिपदार्थः स्वयमप्रकाशमानोऽन्यपदार्थमपि प्रकाशयितुमसमर्थः, तथा जडवस्त्वपीति जानीहि। यथा आदित्यस्य घटादेश्च शब्दादिपञ्चप्रकारैर्वैलक्षण्यम्, एवं चितो जडस्य च वैलक्षण्यम्॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

एवं ज्ञानस्य किं फलमिति चेत्, लोके प्रकाश्यपदार्थनिष्ठ-विकाराः प्रकाशवस्तु कालत्रयेऽपि न स्पृशन्तीति ज्ञानफलम्। तदपि कथमिति चेत्, आदित्येन प्रकाश्यमानघटादिनिष्ठच्छिद्रेण हानिरच्छिद्रेण लाभः, स्पर्शेन त्याज्यत्वमस्पर्शेन ग्राह्यत्वम्, लक्षणेन हर्षोऽलक्षणेन विषादः, समीचीनतयाऽतिशयो असमीचीनतया अनतिशयः, इत्यादिविकारगुणाः प्रकाशकमादित्यं न स्पृशन्ति। एवमात्मना प्रकाश्यमानदेहेन्द्रियादिनिष्ठनामरूपजातिवर्णाश्रम-प्रवृत्तिनिवृत्तिविधिनिषेधषड्भावविकारषडूर्मिषट्कोशान्ध्यमान्द्यपटुत्वा-दिसकलगुणविकाराश्च प्रकाशकमात्मानं कालत्रयेऽपि किंचिदपि स्प्रष्टुं न शक्नुवन्तीति ज्ञानं सुकरमिति जानीहि। एवं चिज्जडयोर्वैलक्षण्यम् ॥

इतः परमानन्दस्य दुःखस्य च वैलक्षण्यमुच्यते। आनन्द-लक्षणं किमिति चेत्, निरुपाधिकं निरतिशयं नित्यं यत्सुखं स आनन्दः। दुःखलक्षणं किमिति चेत्, प्रतिकूलतया वेदनीयत्वम्, इतरेच्छानधीनेच्छाविषयभिन्नत्वे सति द्वेषविषयत्वं वा। तत्तु त्रिविधम् आध्यात्मिकमाधिभौतिकमाधिदैविकं चेति। तत्रेन्द्रियैर्देह एव वातपित्तश्लेष्मवैपरीत्येन जायमानं व्याध्यादिदुःखमाध्या-त्मिकम्। भूतैश्च भौतिकैश्च सर्पव्याघ्रादिभिर्जायमानं दुःखमाधि-भौतिकम्। देवैर्जायमानमतिवृष्ट्यनावृष्टिविद्युत्पातादिदुःखमाधि-दैविकमिति ॥

आनन्दस्य दुःखस्य च को दृष्टान्त इति चेत्, उच्यते। यथा अमृतं स्वयं सुखरूपं सत्स्वमनुभवतोजीवानपि सुखयति, कालकूटविषं स्वयं तापकं सत्स्वमनुभवतो जीवानपि पीडयति। एवंभूतयोरमृतविषयोरन्योन्यं शब्दादिपञ्चप्रकारैर्यथा वैलक्षण्यम्, एवमानन्दलक्षणं तापत्रयात्मके दुःखे नास्ति दुःखलक्षणमप्या-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

त्मस्वरूप आनन्दे नास्ति। तस्माच्छब्दादिभिः पञ्चप्रकारैरनयोर्वैलक्षण्यं जानीहि। अत्र निष्कृष्टार्थः सिद्धान्तः क इति चेत्, रज्जुवत्सद्रूप आदित्यवच्चिद्रूपोऽमृतवदानन्दरूपोऽहंशब्दार्थं आत्मा सर्पवदनृताद्घटवज्जडाद्विषवद्दुःखाद्देहेन्द्रियादिप्रपञ्चाद्विलक्षण इति यो गुरुमुखेणात्मानं जानाति स एवासङ्गः स एव कृतकृत्यः स एव मुक्त इति सकलवेदान्तनिश्चय इति जानीहि॥

॥ इति अष्टमवर्णकम् ॥

## नवमवर्णकम्

आत्मा शरीरत्रयविलक्षणः, अवस्थात्रयसाक्षी, पञ्चकोशव्यतिरिक्तः, सच्चिदानन्दलक्षण इत्यात्मन उक्तेषु चतुर्विधलक्षणेषु शरीरत्रयविलक्षणत्वमेवमष्टमवर्णक उक्तम्। इतः परमवस्थात्रयसाक्षित्वमस्मिन्नवमे वर्णक उच्यते। मनः सत्त्वरजस्तमोगुणात्मकम्। तथापि सत्त्वगुणप्रधानमेव मनः। सात्त्विकेनैव मनसा आत्मा ज्ञातव्यः, न च राजसेन नापि तामसेन। तत्र सत्त्वगुणः सूक्ष्मः। रजोगुणश्चञ्चलः। तमोगुणः स्थूलः। तस्माद्धूमप्रवेशयोग्ये रन्ध्रे बृहत्स्तम्भो यथा न प्रविशति वायुना चलति दीपप्रकाशे सूक्ष्मवर्णो निर्णेतुं यथा न शक्यते, तथैवात्मनि ज्ञातव्ये सति सूक्ष्ममनसैव सात्त्विकेन ज्ञातव्यः। अन्यथा स्थूलमनसा चञ्चलमनसा च सूक्ष्मस्यात्मनः स्वरूपं किञ्चिदपि न प्रतिभाति। तस्मात्सावधानः शृणु॥

अवस्थात्रयं कथमिति चेत्, शृणु। जाग्रदवस्था स्वप्नावस्था सुषुप्त्यवस्था चेत्यवस्थात्रयम्। तत्र सकलेन्द्रियैर्बाह्यार्थोपलम्भो जाग्रदवस्था। जाग्रद्वासनया अन्तःकरणस्य भोक्तृभोग्यादिरूपेण

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

परिणामः स्वप्नावस्था । स्थूलसूक्ष्मजगतः सर्वस्यापि कारणेऽज्ञाने लयानन्तरमज्ञानमात्रस्य केवलसाक्षिवेद्यस्यावस्थानं सुषुप्तिः । एवमवस्थात्रयम् ॥

एतदवस्थात्रयसाक्षित्वमात्मनः कथमिति चेत्, आत्मनि साक्षिलक्षणस्य विद्यमानत्वादिति ब्रूमः । साक्षिलक्षणं किमिति चेत्, लोक एकस्य पुरुषस्यान्यदीयावस्थायां अवस्थाव्यापाराणामन्यस्य तस्य चावस्थावतो विकाररहित्येन साक्षाद्द्रष्टवत्त्वं साक्षित्वम्, यथा तूष्णीमेव स्थितस्य संन्यासिनस्तत्रागतपुरुषतदवस्थातद्व्यापाराणां निर्विकारतया साक्षाद्द्रष्टवत्त्वं साक्षित्वम् । आत्मापि जीवानामवस्थात्रयमवस्थात्रयव्यापारानवस्थावतो जीवांश्च पश्यन्नपि निर्विकारतया अवितिष्ठेते ॥

इदमेव साक्षित्वं दृष्टान्तपूर्वकं पुनरपि कथ्यते । तच्छृणु । एकमहानगरवज्जाग्रदवस्था । तत्र प्राकारवत्स्वप्नावस्था । तदन्तःप्रासादवत्सुषुप्त्यवस्था । तत्त्रयाभिमानिप्रभुवदवस्थात्रयाभिमानी जीवः । यथा स प्रभुः प्राकाराद्बहिर्वर्तमानः प्रियाप्रिये अनुभूय हर्षं विषादं च प्राप्य तत्प्राकारस्यान्तश्च प्रियाप्रिये अनुभूय हर्षं विषादं च प्राप्य ततःप्रासाद आगत्य सर्वान्व्यापारान्विहाय तूष्णीं स्त्रिया सह सुखमनुभवन्नास्ते, एवं जीवात्मापि स्थूलशरीराभिमानी जाग्रदवस्थायां त्रिविधकरणव्यापारयुक्तः सन्विश्वो भूत्वा सूक्ष्मशरीराभिमानी स्वप्नावस्थायां मनोमयत्रिविधकरणगुणदोषव्यापारयुक्तः संस्तैजसो भूत्वा पश्चात्कारणशरीराभिमानी सुषुप्त्यवस्थायान्त्रिविधकरणगणमुपसंहृत्य प्राज्ञो भूत्वा नित्यानन्दमनुभवन्नास्ते । एवमात्मा कूटस्थ आकाशवदसङ्ग एव सन्नवस्थात्रयेऽपि प्रत्यक्चैतन्यसाक्षिरूपेण वर्तत इति श्रुतियुक्त्यनुभवैर्ज्ञातव्यम् । 'साक्षी चेता केवलो निर्गुणश्च' इति श्रुतिः । पत्तनाकाशदृष्टान्तो युक्तिः ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अनुभवः क्व इति चेत्, पूर्वपूर्वदिनावस्थात्रयमस्माभिः प्रतिदिनं स्मर्यते; स्मरणस्यानुभवपूर्वकत्वनियमादस्माभिरवस्थात्रयमनुभूयत एवेति सिद्धम् । एवमात्मना आगतानामागामिनां चावस्थानां क्रमेणानुभूयमानत्वादनुभवरूपस्यात्मनो नित्यत्वमपि सिद्धम् । एवमवस्थात्रयसाक्षित्वम् ॥

ननु लोके अवस्थावत एव पुरुषस्य स्वावस्थासाक्षित्वं दृश्यते । भवद्भिः कथमन्यस्यान्यावस्थासाक्षित्वमुच्यत इति चेत्, शृणु । अयमवस्थावानन्तःकरणं प्रतिफलिश्चेतनाभासः । स कल्पितो मिथ्याभूतः । स एव जीव इत्युच्यते । तस्य सुषुप्तावन्तःकरणलयेन विनष्टत्वात्स कथं सुषुप्तिसाक्षी स्यात् ? तिसृणामप्यवस्थानामेकसाक्षित्वनियमाद्विम्वभूतस्यात्मन एव सुषुप्तिसाक्षित्वं मन्तव्यम् । तर्हि स एव लाघवेन जाग्रत्स्वप्नयोरपि साक्षीति वक्तुं योग्यः। जीवस्य विकारित्वादपि साक्षित्वं न युज्यते । आत्मनस्तु निर्विकारत्वात्साक्षित्वं युज्यते । जीवः कथं विकारीति चेत् । तस्य 'अहं सुखी' 'अहं दुःखी' इत्यादिरूपेणान्तःकरणवृत्तितादात्म्येन विकारित्वदर्शनाद्विकार्येव ॥

तर्हि जीवव्यतिरेकेणान्यः को वा आत्मा यः साक्षीत्युच्यते ? तस्य किं लक्षणम् ? तस्यास्तित्वे किं प्रमाणम् ? तस्य ज्ञाने क उपायः ? इति चेत्, शृणु । निर्विकारः कूटस्थ एव साक्षी । स एवात्मा । स आकाशवत्सर्वव्यापकः सच्चिदानन्दरूपः । स एवान्तःकरणेषु जीवरूपेण प्रविष्टः सन्संसरति । एवंरूपपारमार्थिकात्मनि वेदान्ताः सर्वेऽपि प्रमाणम् । अवस्थावान्यो जीवश्चिदाभासः स इदानीं जागर्ति, इदानीं स्वप्नं पश्यति, इदानीमज्ञानमोहितः सन्सुषुप्तौ वर्तते, इदानीं सुखी, इदानीं दुःखी, इदानीमुदासीन आस्ते, इत्यस्य जीवस्यावस्थाभेदं सर्वमपि चिद्रूपो यो जानाति स एवात्मा अवस्थात्रयसाक्षीति जानीहि । तस्यात्मनः

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

स्वस्य निर्विकारत्वं कथं ज्ञायत इति चेत्, स्वमुखसौन्दर्यं स्वेन ज्ञातुमशक्यमपि दर्पणप्रतिविम्बितमुखेन यथा ज्ञातुं शक्यते, तथा आत्मनो निर्विकारत्वमप्यन्तःकरणप्रतिविम्बेन ज्ञातुं शक्यते। दर्पणं दर्पणप्रतिविम्बितमुखं च विम्बभूतमुखं यथा न जानाति, तथा अन्तःकरणमन्तःकरणप्रतिविम्बितजीवश्च विम्बभूतमात्मानं न जानाति। तर्ह्ययमात्मा केन ज्ञायते? न केनापि ज्ञायते, ज्ञायमानस्य सर्वस्य दृश्यत्वादात्मनो दृग्रूपत्वात्। स्वयंप्रकाश एवात्मा न त्वन्येन केनापि ज्ञायते। तत्कथमिति चेत्। दृश्यो घटो द्रष्टारं न हि जानाति। स द्रष्टा च स्वात्मानं स्वयमेव जानाति स्वयंप्रकाशत्वात्। यथा मृत इति प्रतीयमानो दशमः पुरुषः पश्चात्तं स्वात्मानं स्वयमेव जानाति, न तु नवस्वन्यतमेन ज्ञायते, तथैवात्मा अनुभवस्वरूप एव न त्वन्येनानुभाव्य इतीयमर्थं त्वमेव प्रमाणपुरःसरं जानीहि॥

तर्हि प्रमाणं किमिति चेत्, शृणु। प्रत्यक्षमित्यनुमानमित्युपमानमिति शव्दः इति च चत्वारि प्रमाणानि। पुनश्चार्थापत्तिः संभव ऐतिह्यमनुपलब्धिरिति च चत्वारि प्रमाणानि सन्ति। पश्चादुक्तानां चतुर्णां पूर्वोक्तेषु चतुर्ष्वेवान्तर्भाव इति सिद्धान्तः। वेदान्तिनश्च केचित्षट्प्रमाणान्युदाहरन्ति। एतेषां लक्षणादिकमतिविस्तृतम्। अस्माकं यावदावश्यकं तावन्मात्रमुच्यते। अक्षिमिन्द्रियम्। इन्द्रियेण जन्यं प्रमाणं प्रत्यक्षप्रमाणम्। धूमादिलिङ्गेन जायमानमनुमानम्। सादृश्येन जायमानमनुमानम्। आप्तवाक्यं शव्दः। आत्मन इन्द्रियागोचरत्वात्तत्र न प्रत्यक्षं प्रमाण प्रवर्तते। निरंशत्वात्तत्रात्मनि नानुमानं प्रवर्तते। अद्वितीयत्वान्नोपमानम्। तस्मादात्मनि शव्द एव प्रमाणम्। आप्तवाक्यं शव्दः। आप्तश्च यथार्थवक्ता। अत ईश्वरवाक्यं श्रुतिरेव शव्दः। तस्माच्छ्रुतिरेवात्मनि प्रमाणम्॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

पूर्वोक्तसाक्षिरूपं संन्यासिनं तेन द्रष्टाः पुरुषतदवस्थातद्व्यापारगुणदोषा यथा न स्पृशन्ति, एवमात्मानं दृश्यमाना अहंकारतदवस्थातद्व्यापारगुणदोषा न स्पृशन्ति। एवं यो भाग्यशाली पुरुषः साक्षीमात्रमात्मानमहंकारादिभिरस्पृष्टं चैतन्यमात्रं श्रुतिभिर्जानाति स एव जीवन्मुक्तः। तथैव श्रुतिरपि वदति। हे पुत्र, त्वमपि वेदान्तशास्त्रमात्मनि प्रमाणमिति विश्वस्य तदुक्तप्रकारेणावस्थात्रयसाक्षिणमात्मानं जानीहि ॥

॥ इति नवमवर्णकम् ॥

## दशमवर्णकम्

इदानीं दशमवर्णके आत्मनः पञ्चकोशव्यतिरिक्तत्वमुच्यते। अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयाः पञ्च कोशाः। अन्नविकारशुक्रशोणितजन्यं षड्भावविकारसहितमन्नेनैव वर्धमानमिदं स्थूलशरीरमेवान्नमयकोशः। कर्मेन्द्रियैः सह प्राणः प्राणमयकोशः। ज्ञानेन्द्रियैः सह मनो मनोमयकोशः। तैरेव सह बुद्धिर्विज्ञानमयकोशः। प्रियमोदप्रमोदवृत्तिभिः सहाज्ञानमानन्दमयकोशः। इष्टवस्तुसंदर्शनसंतोषः प्रियम्। तद्वस्तुलाभसंतोषो मोदः। तदनुभवसंतोषः प्रमोदः। एवं पञ्च कोशा। यथा खड्गं तत्कोशः, शिवलिङ्गं संपुटः आम्रफलं त्वक्, पुरुषः कञ्चुकः, इत्येतान्येते यथा आच्छादयन्ति, एव पञ्च कोशा अप्यात्मानमाच्छादयन्ति। अतः कोशा इति संज्ञा। ननु खड्गादीनां तत्कोशादीनां च सत्ता भिन्ना। पञ्चकोशानामात्मभिन्नसत्ताकत्वाभावात्कोशादिभ्यो वैषम्यात्कथमात्माच्छादकत्वमिति चेत्, उच्यते। आदित्यकिरणपरिणामविशेषत्वान्मेघस्य आदित्यसत्तैव सत्ता, तथापि स मेघ

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

आदित्यं यथा आच्छादयति; अग्निमुपजीव्य वर्तमानस्य धूमस्याप्यग्नेः सत्तैव सत्ता, तथापि स धूमो यथा अग्निमाच्छादयति; एवमात्मसत्तया सत्तावन्तोऽपि कोशा आत्मानमाच्छादयन्ति ॥

इतः परमात्मनः पञ्चकोशव्यतिरिक्तत्वमुच्यते। खड्गादिकं तत्कोशादिकं चैकत्वेन खड्गादिरूपेण व्यवह्रियमाणमपि तत्खड्गादिकं कोशाद्भिन्नम्। तद्वत्पञ्चकोशाभिन्नत्वेन व्यवह्रियमाणोऽप्यात्मा तेभ्यो व्यतिरिक्त एव। नन्वात्मनः कोशानां चैकत्वेन व्यवह्रियमाणत्वात्परस्परसंबन्धोऽस्तीति वक्तव्यम्, आत्मनो न केनापि संबन्धः, स निरञ्जन इति कथमुच्यत इति चेत्, शृणु। संबन्धोऽनेकप्रकारः। तर्कसिद्धान्ते समवायसंबन्धः संयोगसंबन्ध इति द्विप्रकारः। अवयवावयविनोर्गुणगुणिनोः क्रियाक्रियावतोर्जातिव्यक्त्योर्विशेषनित्यद्रव्ययोश्च समवायः संबन्धः। आत्मनः पञ्चकोशानां चावयवावयव्यादिष्वपरिगणनान्न समवायः। तर्हि भेरीदण्डयोरिव संयोगोऽस्त्विति चेत्, आत्मनो द्रव्यत्वानङ्गीकारात्सोऽपि न संभवति। तर्ह्यात्मनः कोशानां च को वा संबन्ध इति चेत्, रज्जुसर्पयोः शुक्तिकारजतयोः स्थाणुपुरुषयोराकाशवर्णयोरिव चाध्याससंबन्ध एव। अयमध्यास एकतराध्यासो वा अन्योन्याध्यासो वेति चेत्, अहंकारस्यात्मनश्च मिलित्वैकप्रत्ययविषयत्वादन्योन्याध्यास एव।

आत्मनोऽन्नमयकोशस्य चान्योन्याध्यासः कथमिति चेत्, उच्यते। 'अहं मनुष्यः' 'अहं देवः' इति 'अहं स्त्री' 'अहं पुरुषः' इति 'अहं जातः' 'अहं वर्ते' 'अहं वृद्धिं गतः' 'अहं विपरिणतः' 'अहं जीर्णः' 'अहमितः परं मरिष्यामि' इति 'अहं बालः' 'अहं कुमारः' 'अहं युवा' 'अहं वृद्धः' इति 'अहं ब्राह्मणः' 'अहं क्षत्रियः' 'अहं वैश्यः' 'अहं शूद्रः' इति 'अहं ब्रह्मचारी' 'अहं गृहस्थः' 'अहं

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

वानप्रस्थः' 'अहं संन्यासी' इति 'अहमान्ध्रः' अहं द्राविडः' 'अहं कर्णाटकः' इति 'अहं वत्सगोत्रः' 'अहं कौशिकगोत्रः' इति 'अहं रामः' 'अहं कृष्णः' 'अहं शंकरः' अहं महादेवः' इति 'अहं दीक्षितः' 'अहं शास्त्री' इति 'अहं योद्धा' 'अहं भोजी' इति चान्नमयकोशविकारधर्मानात्मन्यध्यस्यति। आत्मनिष्ठसच्चिदानन्दानन्नमयकोशे शरीरे 'मम शरीरमस्ति भाति प्रियम्' इत्यध्यस्यति। एवमन्नमयकोशस्यात्मनश्चान्योन्याध्यासः॥

अथ प्राणमयकोशस्यात्मनश्चान्योन्याध्यासः कथमिति चेत्। 'अहं क्षुधावान्' 'अहं पिपासावान्' 'अहं वलवान्' अहं वीर्यवान्' 'अहं क्रियावान्' अहं वक्ता' 'अहं गन्ता' 'अहं दाता' 'अहं विसर्जयिता' 'अहमानन्दयिता' 'अहं मूकः' 'अहं पङ्गुः' 'अहं विहस्तः' 'अहं षण्डः' इत्येवं प्राणमयकोशविकारानात्मन्यध्यस्यति। आत्मनः सच्चिदानन्दान् 'मम प्राणोऽस्ति भाति प्रियः' इति प्राणमयकोशे चाध्यस्यति। एवं प्राणमयकोशस्यात्मनश्चान्योन्याध्यासः॥

अथ मनोमयकोशस्यात्मनश्चान्योन्याध्यास उच्यते। 'अहं संकल्पवान्' 'अहं विकल्पवान्' 'अहं शोकवान्' 'अहं मोहवान्' 'अहं कामी' 'अहं लोभी' 'अहं श्रोता' 'अहं स्प्रष्टा' 'अहं द्रष्टा' 'अहं रसयिता' 'अहं घ्राता' 'अहं बधिरः' 'अहमन्धः' इत्येव मनोमयकोशविकारानात्मन्यध्यस्यति। आत्मधर्मान्सच्चिदानन्दांश्च 'मम मनः सम्यगस्ति भाति प्रियम्' इति मनोमयकोशेऽध्यस्यति। एवं मनोमयकोशस्यात्मनश्चान्योन्याध्यासः॥

अथ विज्ञानमयकोशस्यात्मनश्चान्योन्याध्यास उच्यते। 'अहं कर्ता' 'अहं बुद्धिमान्' 'अहमूहापोहचतुरः' 'अहमेकसन्तग्राही' 'अहं लोकान्तरगामी' 'अहं रागी' 'अहं द्वेषी' 'अहं श्रोत्रियः' 'अहं पण्डितः' 'अहं विरक्तः' 'अहं भक्तिमान्' 'अहमुपासकः'

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

'अहं ज्ञानी' इत्येवं विज्ञानमयकोशविकारानात्मन्यध्यस्यति। आत्मलक्षणसच्चिदानन्दान् 'मम बुद्धिरस्ति भाति प्रिया' इति विज्ञानमयकोशे चाध्यस्यति। एवं विज्ञानमयकोशस्यात्मनश्चान्योन्याध्यासः।

अथानन्दमयकोशस्यात्मनश्चान्योन्याध्यास उच्यते। 'अहं भोक्ता' 'अहं सुखी' 'अहं संतुष्टः' 'अहं सात्त्विकः' 'अहं राजसः' 'अहं तामसः' 'अहं जडः' 'अहं मूढः' 'अहं शून्यः' 'अहं दुष्टः' 'अहं मोहितः' 'अहमविवेकी' 'अहं भ्रान्तः' इत्येवमानन्दमयकोशविकारानात्मन्यध्यस्यति। आत्मनः सच्चिदानन्दांश्च 'ममाज्ञानमस्ति भाति सुखम्' इत्यानन्दमयकोशेऽध्यस्यति। एवमानन्दमयकोशस्यात्मनश्चान्योन्याध्यासः॥

एवं पञ्चकोशानामात्मनश्चान्योन्याध्यासः सम्बन्धः। अयमयसाध्यः केनागच्छतीति चेत्, अयमात्मा, एते पञ्च कोशाः, इति सम्यग्विभज्य ज्ञानाभावादविवेकेनागच्छति। तर्हि कोशानामात्मनश्च विवेकः कथमिति चेत्, उच्यते। लोके पशुपुत्रमित्रकलत्रगृहधनधान्यादिवत् 'इदं मम शरीरम्' 'अयं मम प्राणः' 'इदं मम मनः' 'इयं मम बुद्धिः' इदं ममाज्ञानम्' इति 'इदं मम' इति बुद्धिविषयत्वाच्छरीरादिरूपाः पञ्च कोषा आत्मा न भवन्ति, किं तु पश्वादिवदनात्मैवेति पञ्च कोशाश्चात्मा च पृथक्पृथगिति युक्तिः। शरीररहित आत्मेति प्रतिपादिकाः 'अशरीरम्–' इत्यादिश्रुतयश्च सन्ति। पश्वादीनां क्षयवृद्ध्यादिविकारास्तत्स्वामिनं द्रष्टारं यथा न स्पृशन्तीत्यनुभवः, एवं शरीरादिपञ्चकोशविकारा द्रष्टारमात्मानं मां कदापि न स्पृशन्तीत्यनुभवः॥

ननु हे स्वामिन्, भवद्भिरुक्तपश्वादिदृष्टान्तस्य बाह्यत्वात्स ज्ञातुं योग्यः; दार्ष्टान्तिकस्यान्तरत्वात्स मम बुद्धिं नारोहति; किं

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

च पञ्च कोशाः पदवादिवत्पृथङ्नावभासन्ते, किं तु तप्तायः-पिण्डवदात्मन्येकतयाऽवभासन्ते; एवं दृष्टान्तदार्ष्टान्तिकयोर्बहुवैषम्यमस्ति; कथं तेषामात्मनः स्वप्रकाशात्पृथक्त्वेन ज्ञानमिति चेत्, शृणु। बाह्यदृष्टिर्नेत्रम्। सूक्ष्मदृष्टिर्बुद्धिः। बाह्यदृष्ट्या ज्ञातुमशक्या अपि पदार्था आन्तरदृष्ट्या ज्ञातुं शक्यन्ते। बाह्य-वीणातन्त्र्यास्तत्स्वराणां तप्तजलादग्नेः पुष्पात्सुगन्धस्य च पृथक्त्वेन स्थूलदृष्ट्या ज्ञातुमशक्यत्वेऽपि सूक्ष्मश्रोत्रादिज्ञानेन्द्रियैर्बुद्धिमता पुरुषेण पृथक्त्वेन 'इयं वीणातन्त्री, इमे स्वराः' 'इदं जलम्, अयमग्निः' 'इदं पुष्पम्, अयं सुगन्धः' इति वीणादिभ्यः पृथक्त्वेन स्वरादीनां ज्ञानं सुकरम्। एवमेव क्षीरजलयोर्विभजनमन्येषां दुष्करमपि हंसानां सुकरम्। एतदुभयं यथा तथा आत्मनः सकाशात्पञ्चकोशानां पृथक्करणं स्थूलबुद्धीनां दुष्करमपि सूक्ष्मबुद्धीनां सुकरम्॥

हे पुत्र, सिद्धान्तं वचः शृणु। एतावत्पर्यन्तं कालवासनया युक्तानां यः प्रपञ्चव्यवहारस्तमङ्गीकृत्य पञ्च कोशा इति तद्विवेक इति चैवमाद्युक्तम्। परमार्थे विचार्यमाणे आत्मनि न पञ्च कोशाः सन्ति। कथमिति चेत्। यथा रज्जौ सर्पः, शुक्तिकायां रजतम्, स्थाणौ पुरुषः, आकाशे नीलिमा, इत्येतेषां भ्रान्त्या प्रतीतिमात्रमेव न स्वरूपेणावस्थानम्; कालत्रयेऽप्यारोपितानां तेषां सर्पादीनां न वास्तवता; तथा आत्मनि पञ्च कोशा अप्यारोपिता एव न वास्तवाः। लोके यदारोपितं तदसदेव, यथा द्विचन्द्रादिकम्। तथा पञ्चकोशा अप्यात्मन्यारोपितत्वान्मिथ्याभूता एव॥

नन्वारोपितसर्पादयोऽधिष्ठानज्ञाने सति तत्क्षणमेव न प्रतीयन्ते, पञ्च कोशास्त्वात्मज्ञाने सत्यपि प्रतीयन्त एव न नश्यन्ति, तेषां कथमारोपितत्वमिति चेत्, शृणु। लोके प्रातिभा-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

सिकसद्व्यावहारिकसत्पारमार्थिकसदिति च त्रिविधं सत्। ईश्वरसृष्टिर्जीवसृष्टिरिति च द्विविधा सृष्टिः। एवं सत्यध्यासरूपं शुक्तिकारजतादिकं सर्वं जीवसृष्टिः। इदं प्रातिभासिकं सत्। अस्या जीवसृष्टेरधिष्ठानभूतमाकाशादिकं सर्वं व्यावहारिकं सत्। तत्सर्वमीश्वरसृष्टिः। अस्या ईश्वरसृष्टेरप्यधिष्ठानभूतं यद्ब्रह्म तत्पारमार्थिकं सत्। तदेव नित्यम्। व्यावहारिकं सद्व्यवहारक्षयपर्यन्तं तिष्ठति। प्रातिभासिकं सत्प्रतिभासक्षयपर्यन्तं तिष्ठति। प्रातिभासिकं व्यावहारिकं चाध्यस्तत्वेन समाने अपि सत्तया न समाने। किं च व्यावहारिकमपि प्रातिभासिकवदधिष्ठानज्ञानेन सद्यो नश्येद्यद्यात्मज्ञानिनो जीवन्मुक्ता अपि न स्युः, ज्ञानोपदेशगुरुशिष्यपरम्परा चापि न स्यात्, ज्ञानिनां व्यवहाराभावादज्ञानिनां चोपदेष्टुमशक्यत्वात्। तस्माद्यथा मृद्यध्यस्तः पृथुबुध्नोदराकारो घटो यावत्कुलालव्यापारक्षयं तिष्ठति, एवमात्मन्यध्यस्ताः पञ्च कोशा मिथ्येति ज्ञाता अपि यावत्प्रारब्धक्षयं दग्धपटवत्प्रतीयन्त इति जानीहि ॥

किं बहुना? सिद्धान्तस्त्वेवम्। मृद्यारोपिते घटनामरूपे बाधिते सति मृन्मात्रं यथा सत्यतया अवशिष्यते, एवमात्मन्यारोपितेषु पञ्चकोशेष्वात्मज्ञानेन बाधितेषु सत्सु सच्चिदानन्दरूप आत्मैक एव सत्यतया अवशिष्यत इत्येवं यो जानाति स एवात्मज्ञानी स एव ब्रह्मज्ञानी, तस्यैव विदेहमुक्तिर्भविष्यतीति सर्वा अप्युपनिषद उद्घोषयन्ति ॥

॥ इति दशमवर्णकम् ॥

## एकादशवर्णकम्

अथेदानीमस्मिन्नेकादशवर्णके आत्मनः सच्चिदानन्दरूपत्वं चतुर्थं लक्षणमुच्यते। आत्मनः सद्रूपं किं चिद्रूपं किमानन्दरूपं

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

किमिति चेत्, शृणु। कालत्रयेऽपि केनाप्यबाध्यमानत्वे सत्येकरूपत्वं सतो लक्षणम्। इदं लक्षणमात्मन्यस्ति। अस्य प्रमाणं किमिति चेत्, अस्य प्रपञ्चस्य सृष्टेः पूर्वम् 'सदेवासीत्' 'आत्मन आकाशः संभूतः' इत्यादिवेदान्तशास्त्रं प्रमाणम्। किं च सर्वजनानामनुभवश्च प्रमाणम्। आढ्यो दरिद्रः कर्मी भक्तो मुमुक्षुरिति सर्वे जनाः। एतेषामनुभवः कीदृश इति चेत्, 'अहं पूर्वजन्मनि सत्पात्रेषु यत्किंचिद्दत्तवान्, तेनास्मिञ्जन्मन्यैश्वर्यमनुभवामि; अस्मिञ्जन्मन्यपि यत्किंचिद्दत्तं चेद्भविष्यज्जन्मन्यैश्वर्यमनुभविष्यामि' इत्याढ्यस्यानुभवः 'अहं पूर्वजन्मनि सत्पात्रेषु किमपि न दत्तवान्, तेनास्मिञ्जन्मनि दारिद्र्यमनुभवामि; अस्मिञ्जन्मनि मया न दत्तं चेद्भाविजन्मन्यपि दारिद्र्यमनुभविष्यामि' इति दरिद्रस्यानुभवः। 'पूर्वजन्मनि सत्कर्माणि मयाऽनुष्ठितानि; तद्वासनया अस्मिन्नपि जन्मनि सत्कर्माणि मयाऽनुष्ठीयन्ते; तेन भाविजन्मन्यपि स्वर्गे देवत्वमायास्यति' इति कर्मिणोऽनुभवः। 'पूर्वजन्मन्यहं भगवन्तमुपासितवान्, तद्वासनया अस्मिन्नपि जन्मनि भगवद्भक्तिरासीत्; अनेन भाविजन्मनि सालोक्यादिमुक्ति वैकुण्ठादिलोकेऽनुभविष्यामि' इति भक्तस्यानुभवः। 'बहुजन्मस्वीश्वरार्पणरूपेण मया कर्माणि कृतानि तेनास्मिञ्जन्मनि साधनचतुष्टयं सद्गुरुलाभः श्रवणादिकमात्मज्ञानं च लब्धम्; इतः परं मम जन्म नास्ति, अहं कृतकृत्यः' इति मुमुक्षोरनुभवः। एवं सर्वेषां जनानां कालत्रयेऽपि 'अहमस्मि' इत्यनुभवदर्शनादात्मन्यध्यस्तस्य देहस्यैव नाशः, आत्मनस्तु न कदाचिदपि नाश इति जानीहि। तस्मादात्मनः कालत्रयेऽप्यबाध्यमानत्वे सत्येकरूपत्वस्य विद्यमानत्वादात्मनः सद्रूपत्वमस्ति ॥

हे स्वामिन्, अनुभवेनात्मनः सद्रूपत्वमेवमुक्तं न युक्त्येति चेत्, युक्त्यापि विचार्यमाणे आत्मनः सद्रूपत्वं सेत्स्यति। तत्कथमिति चेत्, शृणु। वयमस्मिल्लोके विद्यमाना वा न वेति विचार्य-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

माणे विद्यमाना एवेति जानीहि। तथा सर्वेषाम् 'अहमिहास्मि' इत्यनुभवात्। एवं विद्यमाना वयं शरीरिणो वा अशरीरिणो वा ? शरीरिण एव नाशरीरिणः, शरीरस्य दर्शनात् ॥

इदं शरीरं केन आगतमिति विचार्यमाणे कर्मणेति निश्चयः। तत्कर्म अस्मदीयं वा अन्यदीयं वेति चेत्, अस्मदीयमेवेति वक्तव्यम्; अन्यदीयकर्मणा अन्यस्य स्वर्गफलाननुभवात्, अन्यथा अन्यकर्मणा अन्यः स्वर्गादिकं प्राप्नुयात् ब्राह्मणेन यागे कृते शूद्रः स्वर्गमाप्नुयात्। अत अमदीयकर्मणा प्राप्तं अस्माकं शरीरमिति वक्तव्यम् ॥

तदेतच्छरीरारम्भकं कर्मास्मिञ्जन्मनि कृतं वा पूर्वजन्मनि कृतं वेति विचार्यमाणे पूर्वजन्मनि कृतमित्येव वक्तव्यम्, एतज्जन्मकृतस्यैतच्छरीरं प्रति पूर्वभावित्वाभावेनाकारणत्वात्। पूर्वजन्मनि कर्मकरणकाले वयं विद्यमाना वा न वेति विचार्यमाणे विद्यमाना एव, अविद्यमानैः कर्मणः कर्तुमशक्यत्वात्। तदानीमस्माकं शरीरमासीद्वा न वेति चेत्, आसीदेव, शरीराभावे कर्मणः कर्तुमशक्यत्वात्। तच्छरीरमपि तत्पूर्वजन्मकृतकर्मणा वा तदनन्तरकर्मणा वा ? तत्पूर्वजन्मकृतकर्मणैवेति वक्तव्यम्। एवं पुनः पुनर्विचार्यमाणे कर्मणश्च शरीरस्य च प्रवाहरूपेणानादित्वं सिद्धम्। तदुभयवत आत्मन आकाशस्येव साक्षादेव मुख्यमेव स्वरूपेणैवानादित्वं सिद्धम्। एवं भूतकाले वर्तमानकाले च सत्त्वं सिद्धमिति युक्त्या साधितम् ॥

इतः परं भविष्यत्कालेऽप्यात्मनः सत्त्वं युक्त्या साध्यते। अस्माभिर्जन्मान्तरेषु श्रवणमननादिकमकृत्वा कर्मण एव मुख्यबुद्ध्या अनुष्ठितत्वादेतज्जन्म शरीरं चागतम्। अस्मिञ्जन्मनि क्रियमाणं कर्मापीतः परं जन्म ददाति। तस्मिन्नपि क्रियमाणं

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

कर्म ततः परं जन्म ददाति। एव पुनः पुनर्विचार्यमाणे कर्मप्रवाहस्य शरीरप्रवाहस्य च भविष्यत्कालेऽन्तो नास्ति तत्त्वज्ञानेन कर्मणे क्षीणे सति शरीरमपि नायाति। तदुभयसंवन्ध्यात्मा तु यावद्ब्रह्मज्ञानं शरीरस्य सृष्टिप्रलयावनुभवञ्शरीरस्य स्थितिकाले सुखदुःखे अनुभवन्सन्, अधः स्थावरपर्यन्तमूर्ध्वं ब्रह्मलोकपर्यन्तं परिभ्रमंस्तिष्ठत्येव न नश्यति। तत्त्वज्ञाने सत्यविद्याकामकर्मादीनामपि नाशाद्दुःखहेतोरभावात्स्वरूपानन्दभवन्विदेहमुक्तौ सुखमेव तिष्ठति। एवं भविष्यत्कालेऽप्यात्मनो न कदाचिदप्यसत्त्वम्, किं तु सर्वदा सत्त्वमेव युक्त्या सिध्यति॥

एवं कालत्रयेऽप्यात्मनो विद्यमानत्वादवाधितत्वेन परमार्थत एकरूपत्वात्सत्त्वं सिद्धम्। एवं श्रुतियुक्त्यनुभवैरनेकप्रलयेष्वनेकप्रपञ्चेषु विनष्टेष्वपि स्वयमविनष्टः सन्वर्तते। अतः सृष्टिस्थितिसंहाराः प्रपञ्चस्यैव न त्वात्मनः। एवं कालत्रयेऽप्येकरूपत्वादबाधितत्वाच्चात्मा सद्रूप इति जानीहि॥

आत्मनश्चिद्रूपत्वे प्रमाणं किमिति चेत्, शृणु। सूर्यादिसाधनान्तरानपेक्षं स्वयं प्रकाशमानं सत्स्वस्मिन्नारोपितसकलजडपदार्थविभासकं चिद्रूपम्। एतच्चिद्रूपत्वलक्षणमात्मन्यस्ति। कथमिति चेत्। आत्मा गाढान्धकारेऽपीतरानपेक्षमेव स्वयं प्रकाशते। स्वस्मिन्नारोपितशरीरबाल्ययौवनवार्धक्यावस्था अवस्थाव्यापारांश्चेतरानपेक्षं सम्यग्जानाति। अत आत्मनश्चिद्रूपत्वं सिद्धम्॥

नन्वस्माकं सर्वज्ञत्वाभावात्सर्वपदार्थविभासकत्वं कथमिति चेत्। प्रपञ्च आन्तरो बाह्य इति द्विविधः। एतत्प्रपञ्चद्वयमप्यस्माभिः प्रकाश्यते। न वयं तेन कदाचिदपि प्रकाश्याः। तत्कथमिति चेत् उच्यते। बाह्यप्रपञ्चो नाम पृथिव्यप्तेजोवाय्वाकाशा इति शब्दस्पर्शरूपरसगन्धा इति पञ्चीकृतभूतानीति ब्रह्माण्ड इति

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

चतुर्दश भुवनानीति चतुर्विधस्थूलशरीराणीति च विविधनामरूप-गुणधर्मविकारशक्त्याश्रयः। एतं बाह्यप्रपञ्चं ह्यावान्तरभेदेन बहुधा विभज्य प्रमाणैर्वयमेव जानीमः, न त्वस्मानयं जानातीत्यन्तर्मुखतया विचार्यमाणेऽस्माकं बाह्यप्रपञ्चावभासकत्वं सिद्धम् ॥

अथ आन्तरप्रपञ्चावभासकत्वमस्माकं कथमिति चेत्, शृणु। आन्तरप्रपञ्चोऽन्नमयादिजीवन्मुक्तिपर्यन्तैः प्रकारैर्बहुधा भिन्नः। स आन्तरप्रपञ्चः 'अयमन्नमयः' 'अयं प्राणमयः' 'अयं मनोमयः' 'अयं विज्ञानमयः' 'अयमानन्दमयः' 'एवमिमे पञ्च कोशाः' इति, 'इदं स्थूलशरीरम्' 'इदं सूक्ष्मशरीरम्' 'इदं कारणशरीरम्' 'एतच्छरीर-त्रयम्' इति च, 'इमे षड् भावविकाराः' 'इमे षट् कोशाः' 'इमे षडूर्मयः' 'इदमान्ध्यम्' 'इदं मान्द्यम्' 'इदं पटुत्वम्' 'अयं रागः' 'अयं द्वेषः' 'इदं त्रिविधकरणम्' 'इदमन्तःकरणम्' 'अयं जाग्रत' 'अयं स्वप्नः' 'इयं सुषुप्तिः' एवमेवावस्थात्रयमिति च, 'इदं ज्ञाने-न्द्रियपञ्चकम्' 'इदं कर्मेन्द्रियपञ्चकम्' 'इमे पञ्च प्राणाः' 'इमे उपप्राणाः' 'इदं मनः' 'इयं बुद्धिः' 'इदं चित्तम्' 'अयमहंकारः' 'अयं संकल्पः' 'अयं निश्चयः' 'इदमवधानम्' 'अयमभिमानः' 'अयं विश्वः' 'अयं तैजसः' 'अयं प्राज्ञः' इत्येवमवस्थावन्त इति, 'अयं प्रातिभासिकः' अयं व्यावहारिकः' 'अयं पारमार्थिकः' 'इदं सात्त्विकम्' 'इदं राजसम्' 'इदं तामसम्' 'इदं सुखम्' 'इदं दुःखम्' 'इदं ज्ञानम्' 'इदमज्ञानम्' 'इदं प्रियम्' 'इदमप्रियम्' 'इयमुपेक्षा' 'इदं साधनचतुष्टयम्' 'इदं मैत्र्यादिचतुष्टयम्' 'अयमष्टाङ्गयोगः' 'इदं श्रवणम्' 'इदं मननम्' 'इदं निदिध्यासनम्' 'अयं समाधिः' इति च, 'इदं प्रमाणम्' 'इदं प्रमेयम्' 'अयं प्रमाता' 'इदं तापत्रयम्' 'अयमाधिः' 'अयं व्याधिः' 'इदमारोग्यम्' 'इयं भक्तिः' 'इदं वैराग्यम्' 'इदं मन्दम्' 'इदं तीव्रम्' 'इदं तीव्रतरम्' 'इदं सगुणो-पासनम्' 'अयं मनोनाशः' 'अयं वासनाक्षयः' 'इयं विदेहमुक्तिः'

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

'इयं जीवन्मुक्तिः' इत्येवमादिविविधनामरूपगुणविकारशक्त्याश्रय-भूत आन्तरः प्रपञ्चः सर्वोऽप्येवमेव पृथक्पृथग्विभज्यास्माभिर्ज्ञायते, स आन्तरः प्रपञ्चस्त्वस्मान्न जानातोति सम्यग्विचारे क्रियमाणे यत आन्तरः प्रपञ्चोऽस्माभिर्ज्ञायते, अत्र आत्मनश्चिल्लक्षणसद्भा-वादात्मा चिद्रूपः ॥

हे स्वामिन्, आत्मा चिद्रूपः केनापि न ज्ञायत इति भवद्भि-रुक्तं खलु? मनसा सकलं ज्ञायते, आत्मापि तेनैव मनसा ज्ञायतामिति चेत्, शृणु। मन उत्पत्तिविनाशवत्संकल्परूपं परि-च्छिन्नं घटवद्भूतकार्यं कामादिविकारकलुषीकृतं स्मृतिविस्मृति-मत्। एवंभूतं मनो जडमिति ज्ञातव्यम्। तस्य मनसः प्रकाश एव नास्ति। तदपि मनश्चितैव ज्ञायते। तादृशं जडं मनः स्व-प्रकाशचिदात्मानं कथं जानीयात्? न कथमपि जानीयादित्यवेहि ॥

तर्हि 'मनसैवानुद्रष्टव्यम्' इति शास्त्रस्य किं तात्पर्यमिति चेत्। शृणु अग्निना तप्तस्य स्वर्णस्य प्रकाशो जायत इति व्यव-हारेऽग्निना स्वर्णेऽविद्यमानः प्रकाशो नूतनतया न संपाद्यते। किं त्वग्निना तप्ते सुवर्णे मले निरस्ते सति पूर्वसिद्धः स्वर्णप्रकाशः स्वयं प्रकाशते, न तु नूतनः प्रकाशः संपाद्यते। नूतनतया संपाद्यत इति चेत्। आमपाकनिक्षिप्ते घटेऽप्यग्निः प्रकाशं संपादयेत्। तथा न दृश्यते। अयमर्थो यथा, तथा मनश्चात्माकारेण परिणम-मानमात्मप्रतिबिम्बसहितं च सदात्मा वारकं मिथ्याभूतमनाद्यज्ञान बाधते। निरस्तेऽज्ञाने स्वात्मा स्वयमेव भासत इति 'मनसैवानु-द्रष्टव्यम्' इति शास्त्रस्य तात्पर्यम्। तस्मान्मनश्चात्मनैव ज्ञायते, न त्वात्मा मनसा ज्ञायते। एतद्वा कथमिति चेत्, शृणु। दीपे-नान्धकारविनाशस्थले स्थालीं च तैलं च वर्तिश्चेत्येतत्त्रयमप्य-न्धकारं विनाशयितुं न शक्नोति। सर्वत्र परिपूर्णः कारणाग्नि-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

रप्येतत्साधनं विहाय केवलं स्वयमेव तमन्धकारं नाशयितुं न शक्नोति। तथापि तद्वर्त्तिसंबन्ध्यग्निर्दीपनामधेयः सन्नन्धकारं बाधते। एकमेव प्रकृते स्थालीरूपशरीरे कर्मरूपतैलेनोत्थापित-वर्त्तिरूपमनस्यग्निरूप आत्मा आरुह्य तदभेदेनावस्थितो जीवना-मापि संस्तत्तद्विषयावारकाज्ञानरूपान्धकारं निरस्य दीपो घटादि-पदार्थानिव बाह्याभ्यन्तरपदार्थान्प्रकाशयति। तस्माद्धे पुत्र, दीप-प्रकाशः स्वभासा यथा स्वयमेव प्रकाशः सन्स्वसबन्धिपदार्थानपि प्रकाशयति, एवमेवान्तःकरणमारुह्य स्वचैतन्येनैव प्रकाशमान आत्मापि स्वसंबन्धिपदार्थान्बाह्यानाभ्यन्तरांश्च प्रकाशयति। अत आत्मनश्चिद्रूपत्व सिद्धम्॥

अथानन्दरूपत्वमुच्यते। नित्यं निरुपाधिकं निरतिशयं यत्सुखं स आनन्दः। स एवात्मनः स्वरूपम्। अत एव स्रक्चन्दनवनिता-दिविषयेभ्यो जातमनित्यं सोपाधिकमतिशययुक्तं यत्सुख तदात्म-स्वरूपानन्दो न भवति। तस्मात्पूर्वोक्त आनन्द एवात्मस्वरूपम्। तत्कथमिति चेत्। सौषुप्तानन्दे तत्सुखलक्षणस्य विद्यमानत्वात्त-मानन्दमहमेवेति विजानीहि। ननु सुषुप्तौ दुःखनिवृत्तिरेव दृश्यते, भवदुक्तानन्दो नानुभूयते, तस्मात्तत्र कथं सुषुप्तावानन्दलक्षणविचार इति चेत् शृणु। लोके सुप्तोत्थितः पुरुषः 'अहमेतावन्तं कालं सुखमस्वाप्सम्' इति सुषुप्तावात्मनः सुखसद्भावमेव वदति। अतः सुषुप्तौ सर्वेषामपि स्वानुभवेनानन्दोऽस्ति। तर्हि भवदुक्तं नित्यत्वं निरुपाधिकत्वं निरतिशयत्वमिति लक्षणत्रयं सौषुप्तानन्देऽस्ति चेद्वक्तव्यमिति चेत्, शृणु। प्रथमतो निरुपाधिकत्वमुच्यते। स्रक्च-न्दनवनितादिविषया उपाधयः। तैर्जायमानं सुखमौपाधिकम्। तेषूपाधिषु सुषुप्तौ न कोऽप्युपाधिर्दृश्यते। सुखं तु सर्वैरप्यनुभूयते। अतः सुषुप्तौ निरुपाधिक आनन्दोऽस्तीत्यवगम्यताम्। तस्य निरति-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

शयत्वं कथमिति चेत् शृणु। मनुष्यानन्दमारभ्य हिरण्यगर्भानन्दपर्यन्ता एकादशानन्दाः। ते शतगुणोत्तरोत्तराः। अतस्तेषामानन्दानां सातिशयत्वम्। ब्रह्मानन्दस्य सर्वोत्तरस्य निरवधिकत्स्वाधिकानन्दाभावान्निरतिशयत्वम्। स ब्रह्मानन्द एव सौषुप्तानन्दः। अतस्तस्य निरतिशयत्वं सिद्धम्। सर्वेऽपि पुरुषाः 'सुषुप्तिसुखमेव सुखम्, विषयजन्यं सुखं न सुखम्' इति स्त्रीपुत्रादिसुखं विहाय मृदुशय्यादिसाधनानि प्रयत्नेन संपाद्य सौषुप्तसुखमेवानुभवन्ति। अनुभवसमये मोहिनीं सौन्दर्यवतीं स्त्रियमपि प्रबोधयन्तीं प्रहरन्ति। तदानीं न किमपीच्छन्ति। पुनरुत्थिता अपि तमेवानन्दं स्मृत्वा अनुभवितुं पुनः शयनं कुर्वन्ति। अतस्तस्य सौषुप्तानन्दस्य निरतिशयत्वमस्तीत्यवेहि। नित्यत्वं कथमिति चेत्। जाग्रत्स्वप्नयोः सुखस्यानेकरूपेणानेकैर्विषयैः पृथक्पृथगनुभूयमानत्वात्तस्य परिच्छिन्नत्वेनानित्यत्वमस्ति। सुषुप्तिसुखं त्वेकरूपं पूर्णम्। जन्यं च न भवति। अतो नित्यम्। नित्यं चेज्जाग्रत्स्वप्नयोरप्यनुभवितव्यम्, तथा नानुभूयत इति चेत्। जाग्रत्स्वप्नयोरपि तत्सुखमस्त्येव। किं तु वृत्तिविशेषैरावृत्तं सन्नानुभूयते॥

कारणभूतमानन्दं कार्यरूपा अन्तःकरणवृत्तयः कथमावृण्वन्तीति चेत्, आदित्यं मेघवदग्निं धूमवद्रज्जुं सर्पवद्ब्रह्मानन्दमप्यन्तःकरणवृत्तयः कार्यभूता अप्यावृण्वन्ति। यथा आग्न्यादित्यौ भस्महिमाभ्यां बालमूढदृष्ट्या आवृतत्वेन प्रतीयमानावपि विवेकिदृष्ट्या तौ नावृतौ, तथा ब्रह्मानन्दरूपः सौषुप्तानन्दश्च जाग्रत्स्वप्नयोरावृत्त इव बहिर्मुखाणामेव भाति न विवेकिनामन्तर्मुखाणाम्। तेषां तु ब्रह्मानन्दः स्वरूपभूतत्वात्कालत्रयेऽप्येकरूपः सन्प्रतीयते। अतो ब्रह्मानन्दाभिन्नसौषुप्तानन्दस्यापि नित्यत्वं सिद्धम्॥

एवं निरुपाधिकनिरतिशयनित्यब्रह्मानन्दत्रिविधलक्षणानामस्मास्वप्यनुभूयमानत्वादस्माकमानन्दरूपत्वमस्ति। एवं सच्चिदानन्द-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

लक्षणस्यास्मासु श्रुतियुक्त्यनुभवसिद्धत्वादस्माकमात्मनः सच्चिदानन्दब्रह्मत्वं सिद्धमित्यवेहि। 'वयं सच्चिदानन्दस्वरूपाः' इत्यनुभवः कथमायातीति चेत्। षड्विधलिङ्गैर्वेदान्तशास्त्रतात्पर्यावधारणरूपं श्रवणं गुरुमुखात्कृत्वा श्रवणानुसारेण मननं मननानुसारेण निदिध्यासनं कृत्वा पश्चाद्बहुकालं स्थितवतः 'सच्चिदानन्दब्रह्मैवाहम्' इति ज्ञानं जायते। इदं परोक्षज्ञानम्॥

इदं परोक्षज्ञानमपि कृत्वा 'अहं कर्ता' 'ममेदं कर्म' 'अहमेतज्जाति' 'अहमेतद्वर्णः' 'अहमेतदाश्रमः' इत्यभिमानं सर्वमपि विहाय 'अहं ब्रह्मास्मि' 'ब्रह्मैवाहमस्मि' इत्यनुभवं च तत्र प्रयत्नं च तत्र कर्तृत्वं च विहाय तूष्णीं सुषुप्ताविव जले लवणवद्ब्रह्मणि लीनान्तःकरणस्य निर्विशेषं स्थितवतोऽस्य महात्मनो निर्विशेषं यज्ज्ञानं स्वयमेव स्फुरति स एवापरोक्षानुभवः॥

अयमेतादृशानुभवो यदा जायते तदायं पुरुषः स्वानुभवरूपस्तथा आनन्दरूपः। तस्यानन्दवैभवं स एव जानाति नान्यः। तथा आनन्दप्रतिपादको वेदान्तोऽपि न जानाति। न वक्तुमपि शक्नोति। तदानन्दानुभववान्स पुरुषोऽपि तमानन्दं केवलमनुभवत्येव। सौषुप्तानन्दमिव नान्यस्मै वक्तुं शक्नोति। मनसापि स्मर्तुं न शक्नोति। हे पुत्र, तस्मात्तव स्वानुभूतिं त्वमेवानुभवितुं शक्तः। य ईश्वरः कृपया गुरुरूपेणागत्य त्वां बोधितवान्स गुरुरूप ईश्वरोऽपीदमित्थमिति वक्तुं न शक्नोति। हे पुत्र, एवं त्वं स्वानुभवं जानन्नप्यजानन्निवानन्दरूपेण तिष्ठ॥

॥ इति एकादशवर्णकम्॥

## द्वादशवर्णकम्

अस्मिन्द्वादशवर्णके आत्मनोऽखण्डार्थं रहस्यमपि कृपया गुरुरुपदिशति॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

शिष्यः—हे स्वामिन्, भवद्भिरेकादशसु वर्णकेषूपदिष्टैरर्थैर्देहादि-पञ्चकोशेषु 'अहम्' 'मम' इत्यात्मात्मीयत्वबुद्धिर्गलिता । बुद्धि-प्रकाशकं सच्चिदानन्दरूपं यद्ब्रह्म तदेवाहम्' इत्यात्मज्ञानमागतम् । सर्वे संशया नष्टाः । तथाऽपि पुनरेकः संशयो वर्तते । स क इति चेत्, शृणु । अयमात्मा सद्रूप इति चिद्रूप इत्यानन्दरूप इति चोक्तं किल । एवं त्रिविधरूपप्रतिपादकानि त्रीण्यपि पदानि त्रिविधभेद-भिन्नार्थं प्रतिपादयन्ति तथा भिन्नार्थकानीव मम प्रतिभान्ति । तस्मादेतस्य सच्चिदानन्दपदत्रयस्य भिन्नार्थवत्प्रतीयमानस्या-खण्डार्थत्वं कथं सिध्येत् ? इति शिष्यवचः श्रुत्वा गुरुरुपदिशति—हे पुत्र, अखण्डार्थः क इति चेत् । देशपरिच्छेदः कालपरिच्छेदो वस्तुपरिच्छेद इति त्रिविधपरिच्छेदरहिततया अपरिच्छिन्नोऽर्थोऽखण्ड इति जानीहि । तर्ह्यखण्डस्यैतानि त्रीणि लक्षणानि किमर्थानीति चेत्, शृणु । आकाशस्यापि व्यापकत्वेन देशपरिच्छेदरहितत्वात्तत्रा-तिव्याप्तिवारणाय कालपरिच्छेद उपात्तः । आकाशस्योत्पत्तिविना-शवत्त्वेन कालपरिच्छेदोऽस्तीति न तत्रातिव्याप्तिः । देशकाल-परिच्छेदमात्रोपादाने कालेऽतिव्याप्तिः । कालस्य देशपरिच्छेदो नास्ति, कालपरिच्छेदोऽपि नास्ति स्वस्य स्वेनैव परिच्छेत्तुमशक्य-त्वात् । अत उक्तं वस्तुपरिच्छेदरहित इति । कालस्य स्वभिन्नवस्तु-सद्भावाद्वस्तुपरिच्छेदोऽस्ति । आत्मन एवैतत्त्रिविधपरिच्छेदराहित्य-मस्ति । अतस्त्रीणि लक्षणान्युक्तानीति विज्ञेयम् ॥

ननु भवद्भिरुक्तमखण्डार्थलक्षणमात्मनि प्रदर्शयितव्यम्, आत्मन एवाखण्डार्थत्वात् । तच्चात्मनि न दृश्यते । तत्कथमिति चेत्, उच्यते सर्वेषाम् 'अस्मिन्देशे तिष्ठामि, तस्मिन्देशे न तिष्ठामि' इत्यनु-भवेन देशपरिच्छेदराहित्यं नास्ति । 'अहमस्मिन्वर्षे जातः, इतः पर दशमे वर्षे मरिष्यामि' इत्यनुभवेनात्मनः कालपरिच्छेदराहित्यं नास्ति । 'नाहं ब्राह्मणः' 'नाहं क्षत्रियः' इत्याद्यनुभवादात्मनो

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

वस्तुपरिच्छेदराहित्यमपि नास्ति । भवद्भिस्त्रिविधपरिच्छेदशून्य आत्मेति कथमुक्तमिति चेत्, शृणु । मया पूर्वं तवैकादशवर्णक आत्मानात्मलक्षणकथनावसरे 'आत्मा परिपूर्णः' 'अनात्मा परिच्छिन्नः' 'दृश्यं सर्वमध्यस्तम्' इत्युपदिष्टं खलु ? तथाऽपीदानीमात्मलक्षणं प्रति शङ्कां करोषि । तस्मात्त्वं शिष्यो वा प्रतिवादी वेति संदेहः । शिष्यश्चेत्कृपया पुनरप्यनुग्रहं कुर्मः । प्रतिवादी चेत्क्षमया तूष्णीं भविष्यामः, अथ वा कोपेन शप्स्यामः । भवतां कोपो वादिनि फलिष्यति वेति चेत् । शिष्ये उपदेशार्थं क्रियमाणोऽनुग्रहः फलिष्यति चेद्वादिनि क्रियमाणो निग्रहोऽपि फलिष्यति । लोके निग्रहानुग्रहसामर्थ्यवत ईश्वरस्य ब्रह्मज्ञानिनश्च भेदो नास्तीति जानीहि ॥

तर्हि हे स्वामिन्, सद्गुरोः कृपापात्रभूतः शिष्य एवाहम्, ममेकः संदेहो जातः, तस्मादेवं पृष्टवान्, न तु कुतर्केणेति चेत् शृणु । इदं देशकालवस्तुपरिच्छेदत्रयं स्वभावतो देहस्यैव । न तु परिपूर्णप्रत्यगात्मनः परिछेदत्रयमस्ति । प्रत्यगात्मस्वरूपपरिपूर्णब्रह्मणो देशपरिच्छेदो नास्तीत्येतत्कथं ज्ञातव्यमिति चेत्, शृणु । 'घटः सन्' 'पटः सन्' 'कुड्यं सत्' 'कुसूलं सत्' इति 'पृथिवी सती' 'आपः सत्यः' 'तेजः सत्' 'वायुः सन्' 'आकाशः सन्' इति चैवं भूतभौतिकप्रपञ्चे सद्रूपेणानुभूयमानत्वादात्मनो विभुत्वम् । एवं सर्वव्यापकस्यात्मानो देशपरिच्छेदो नास्ति । आत्मनः पूर्वोक्तप्रकारकयुक्त्या अनादित्वेन नित्यत्वाद्भविष्यत्कालपरिच्छेदो नास्ति । एवं भूतकालभविष्यत्कालसंबद्धस्यात्मन एकत्वाद्वर्तमानकालपरिच्छेदो नास्ति । वस्तुपरिच्छेदराहित्यमात्मनः कथमिति चेत्, शृणु । आत्मनः सर्वात्मकत्वाद्वस्तुपरिच्छेदो नास्ति । वस्तूनि कानीति चेत्, सजातीयभेदभिन्नं विजातीयभेदभिन्नं स्वगतभेदभिन्नमिति वस्तूनि तानि वा कथमिति चेत् । वृक्षस्य वृक्षान्तरात्सजातीयभेदः वृक्षस्य शिलादेर्विजातीयभेदः । वृक्षस्य पत्रपुष्पफलादेः स्वगतभेदः अस्य त्रिविधस्यापि

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

भेदस्यात्मन्यभावादात्मा भेदशून्यः। अत एवात्मनो वस्तुपरिच्छेदो नास्तीति जानीहि ॥

नन्वात्मनः सजातीयविजातीयस्वगतभेदा न सन्तीति वक्तुं न शक्यते। कथमिति चेत्। एकमेव चैतन्यं ब्रह्मचैतन्यमितीश्वरचैतन्यमिति कूटस्थचैतन्यमिति जीवचैतन्यमिति च वर्तते। अतः सजातीयभेदोऽस्ति। आत्मस्वरूपं ब्रह्मेत्यनात्मस्वरूपं प्रपञ्च इति द्वयोर्वर्तमानत्वाद्विजातीयभेदोऽस्ति। ब्रह्मणि सच्चिदानन्द इति त्रयस्य वर्तमानत्वात्स्वगतभेदोऽस्ति। एवं भेदत्रये स्थिते आत्मनो भेदत्रयं नास्तीति कथमिति चेत्, शृणु। आकाश एक एवोपाधिभेदेन महाकाश इति मेघाकाश इति घटाकाश इति घटजलप्रतिबिम्बिताकाश इति च, भेदेन यथा प्रतीयते, तथा मायोपाधिनैकमेव चैतन्यं ब्रह्मेतीश्वर इति च अविद्योपाधिना कूटस्थ इति जीव इति च केवलं प्रतीयते। एवं विचार्यमाणे सजातीयभेदो नास्ति। विजातीयभेदः कथं नास्तीति चेत्, शृणु। रज्जुं विना यथा सर्पो नास्ति, आकाशं विना यथा तलमालिन्यं नास्ति, एवमात्मानं विना अनात्मापि नास्ति। अधिष्ठानं विना आरोपितं सर्वं मिथ्यैव। मिथ्या नाम वन्ध्यापुत्रशशविषाणादिवत्कालत्रयेऽप्यविद्यमानम्। अनात्मनः परमार्थतोऽविद्यमानत्वादात्मनो विजातीयभेदो नास्ति। स्वगतभेदः कथं नास्तीति चेत्, शृणु। 'आत्मा' 'साक्षी' 'कूटस्थः' 'पारमार्थिकः' 'प्राज्ञः' 'ब्रह्म' 'सत्' 'चित्' 'आनन्दः' 'नित्यः' 'एकः' 'परिपूर्णः' इत्यादिविधिवाक्यनामानि च 'अस्थूलम्' 'अनणु' 'अद्वैतम्' 'अचिन्त्यम्' 'अविकारि' 'अविनाशि' 'अकर्तृ' 'अकारयितृ' इति निषेधवाक्यनामानि चैकस्मिन्निर्विशेषात्मस्वरूपप्रकाशन एव तात्पर्यवन्ति न तु स्वरूपभेदे आत्मनो निर्विशेषत्वान्निरंशत्वाच्च। तस्मात्स्वगतभेदो नास्तीत्येवं जानीहि ॥

नन्वु सच्चिदानन्दपदानां भिन्नार्थत्वाद्धस्तकरपाणिवत्पर्यायत्वाभा-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

वात्तैः पदैः प्रतिपाद्यमानस्यात्मनः 'वृक्षः पत्रपुष्पफलरूपेण वर्तते' इत्यत्र पत्रादिपदानां भिन्नार्थत्वात्तैः पदैः प्रतिपाद्यमानस्य वृक्षस्येव स्वगतभेदेन भवितव्यमिति चेत्। 'लोहितोष्णप्रकाशो दीपः' इत्यत्र यथा दीपस्य स्वगतभेदो नास्ति, एवम् 'सच्चिदानन्दरूप आत्मा' इत्यत्रापि स्वगतभेदो नास्ति। न च तर्हि 'पत्रपुष्पफलरूपो वृक्षः' इत्यत्रापि स्वगतभेदो न स्यादिति वाच्यम्। तत्र वृक्षस्य सर्वस्यापि पत्रादिरूपत्वं नोच्यते। एकस्मिन्प्रदेशे पत्ररूप एकस्मिन्प्रदेशे पुष्परूप एकस्मिन्प्रदेशे फलरूप इत्युच्यते। अतस्तत्र स्वगभेदोऽस्ति। 'सच्चिदानन्दरूप आत्मा' इत्यत्र सर्वांशेनाप्यात्मनः सच्चिदानन्दरूपत्वस्य प्रतिपाद्यमानत्वात् 'लोहितोष्णप्रकाशो दीपः' इति सर्वांशेनापि लोहितोष्णप्रकाशत्वेन प्रतिपाद्यमानस्य दीपस्येव स्वगतभेदो नास्ति।

एवं चेच्छ्रुतिः 'आत्मा सद्रूपश्चिद्रूप आनन्दरूपः' इति पुनः पुनः किमर्थमुपदिशति एकेनैवोपदेशेनात्मनो ज्ञातुं शक्यत्वादिति चेत्, शृणु श्रुतेस्तात्पर्यं ब्रवीमि। कथमिति चेत्। आत्मनिष्ठं सत्त्वं जगति, चित्त्वं जडेषु बुद्ध्यादिषु, आनन्दत्वं पुत्रभार्यादिषु च, जगन्निष्ठमसत्वं बुद्ध्यादिनिष्ठं जडत्वं पुत्रभार्यादिनिष्ठं दुःखत्वं च सच्चिदानन्द आत्मनि च परस्परं वैपरीत्येनाविद्यया आरोपितम्। अतः 'सर्वं जगत्सत्यम्' 'बुद्ध्यादयश्चेतनाः' पुत्रभार्यादय आनन्दरूपाः' 'अहं नश्वरः' 'अहं जडः' 'अहं दुःखी' इति च परिभ्रमन्ति। एतद्भ्रान्तिनिवृत्तये मातृभूता श्रुतिर्जीवान्प्रत्युपदिशति। कथमिति चेत्। 'हे जीवाः यूयं सच्चिदानन्दरूपा एव' इति बोधनार्थम् 'आत्मा सद्रूपो नानृतरूपः, चिद्रूपो न जडरूपः, आनन्दरूपो न दुःखरूपः' इति तद्भ्रान्तिनिवृत्त्यर्थं बोधयतीति जानीहि। श्रुतिरात्मनः सच्चिदानन्दरूपेण भेदं न बोधयति। लोके केचन वादिनः 'आत्मनः सत्त्वं धर्मः, चित्त्वं सुखं च गुणौ, अत आत्मा सच्चिदानन्दस्वरूपो न भवति' इति कथयन्ति। तन्निवारणार्थमपि श्रुतिः

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

'आत्मा सच्चिदानन्दस्वरूपः' इति वदतीत्यवगन्तव्यम्। भवद्भिः श्रुतेस्तात्पर्यमेवमिति कथं ज्ञानमिति चेत्। सर्वासामपि श्रुतीनामुपक्रमोपसंहारादिषड्विधलिङ्गैरखण्डार्थे तात्पर्यस्यावधारणादिति मन्तव्यम् ॥

हे स्वामिन्, एवं श्रुत्यैवाखण्डार्थः साधितः, इतः परं युक्त्यापि कृपया साधनीय इति चेत्, शृणु। सत्स्वयमेव प्रकाशते वाऽन्येन वा प्रकाशते? आद्ये सदेव चित्स्यात् अन्येन चेत्मतः प्रकाशनं तदन्यद्वस्तु सद्विलक्षणं वा सदन्तरं वा? सद्विलक्षणत्वे तस्य शशविषाणादिवदसत्त्वेन तस्य सत्प्रकाशकत्वं न संभवति। सदन्तरमिति पक्षे तत्सदन्तरं स्वयं प्रकाशते वाऽन्येन प्रकाशते वेति विकल्पे, आद्यपक्षे सत एव स्वयंप्रकाशत्वे चित्त्वं स्यात्, अन्येन प्रकाशत इति पक्षे पुनरपि विकल्पः पूर्ववदायाति। एवं विकल्पे क्रियमाणे आत्माश्रयदोषोऽन्योन्याश्रयदोषश्चन्याक्रकापत्तिदोषोऽनवस्थादोष इति बहवो दोषा आपतेरन्। तस्मात्सत्स्वयमेव प्रकाशते। सतः स्वयंप्रकाशत्वे सदेव चिच्चिदेव सत् उभयमप्येकमेव। सदन्तरमस्तीति वेदेषु न कुत्रापि दृश्यते। अतः सत्स्वयमेव प्रकाशत इति निश्चयः। अतः सदेव चिदिति सिद्धम्। तस्य स्वयं प्रकाशमानस्य सत आनन्दत्वं कथमिति चेत् उच्यते—सतोऽद्वैतत्वादानन्दत्वम्। आनन्दः परिपूर्ण एव तिष्ठति। नाल्पे पूर्णत्वम्। पूर्णत्वं च सतोऽद्वैतस्यैव न द्वैतस्य। कथं सदद्वैतमिति चेत्। हे पुत्र, सतः सद्वितीयत्वं सदन्तरेण वा सद्विलक्षणेन वा वद। नाद्यः, सदन्तरस्य शास्त्रेण युक्त्या अनुभवेन चासिद्धत्वात्। न द्वितीयः, सद्विलक्षणस्य शशविषाणवत्स्वरूपाभावेन तेन सद्वितियत्वस्य वक्तुमशक्यत्वात्। अस्माद्विकल्पद्वयादन्यो विकल्पो नास्ति। अत एकस्य सतो द्वितीयाभावादद्वैतत्वं सिद्धम्। तेन पूर्णत्वं सिद्धम्। तेन स्वप्रकाशसदेवानन्द एवं युक्त्यापि सच्चिदानन्दमखण्डार्थत्वं जानीहि ॥

CC0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अथानुभवेनाखण्डार्थत्वं साध्यते । अखण्डार्थत्वमेकादशवर्णकेऽप्युक्तम् । तथाऽपि पुनरुच्यते दार्ढ्यार्थम् । शृणु । सर्वेषां सुषुप्तावेकं सुखं भाति । तत्सुखं जाग्रत्स्वप्नयोरिव न नानारूपम् । किं त्वेकरूपं निर्बाधम् । तस्मात्तत्सुखमद्वैतमेव । तस्यामवस्थायां सूर्याद्यालोकानपेक्षं सौषुप्तानन्दस्य प्रकाशमानत्वात्तस्य चित्त्वम् । तस्य सौषुप्तानन्दस्य स्वयंप्रकाशत्वे किं प्रमाणमिति चेत् । सुप्तोत्थितस्य 'एतावन्तं कालं सुखमहमस्वाप्सम्' इति स्मरणमायाति । स्मरणस्यानुभवपूर्वकत्वनियमात्सौषुप्तसुखस्यानुभवो वक्तव्यः । तदानीमनुभवकारणस्येन्द्रियादेरभावात्सोऽनुभवः सौषुप्तानन्दस्य स्वयंप्रकाशत्वादेवेति जानीहि ॥

ननु सुषुप्तावनुभवेन सुखं च प्रकाशतेऽज्ञानं च प्रकाशते । तयोर्मध्ये सुखं वा अज्ञानं वा स्वप्रकाशं वास्त्विति विचार्यमाणे सुखमेव स्वप्रकाशमिति वक्तव्यम् । नाज्ञानम् तस्यावरणरूपत्वेन प्रकाशाभावात् । अतः सुषुप्तावात्मरूपं सुखमेव स्वप्रकाशं सत्स्वस्मिन्नारोपितम ज्ञानमपि प्रकाशयति । अतस्तत्सुखं स्वप्रकाशमेवेत्यनुभवेनापि सच्चिदानन्दपदानामखण्डार्थत्वं सिद्धम् ।

एवं श्रुतियुक्त्यनुभवैरात्मनः स्वगतभेदोऽपि नास्ति । एवं सजातीयविजातीयस्वगतभेदानामभावाद्वस्तुपरिच्छेदो नास्ति । एवं देशकालवस्तुपरिच्छेदाभावेनात्मा परिपूर्ण इति सिद्धम् । अनेनाखण्डैकरसत्वं सिद्धम् ॥

हे पुत्र, परिपूर्णानन्दात्मनो दुःखमागन्तुकम् । तद्दुःखं शरीरेण, शरीरं कर्मणा, कर्म रागादिना, रागादिरभिमानेन, अभिमानोऽविवेकेन, अविवेकोऽज्ञानेन चागत इति ज्ञात्वा, तदज्ञानं ज्ञानेन बाधितव्यमिति, ज्ञानं च विचारेणागच्छतीति च, आत्मा सत्यज्ञानानन्दस्वरूप इति च, देहादिप्रपञ्चोऽनृतजडदुःखरूप इति च, स प्रपञ्चोऽध्यारोप इति चैवं विचार्य तत्त्वंपदवाक्यजन्यज्ञानेन स्वात्मनः

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

'अहं ब्रह्मास्मि' इति यत्परोक्षज्ञानं तदनुभवेन साक्षात्काररूपं यदपरोक्षज्ञानमेतच्च यः प्राप्नोति, स एव 'चण्डालोऽस्तु स तु द्विजोऽस्तु गुरुरित्येषा मनीषा मम' इति भगवत्पूज्यपादाचार्यवचनात्कुटीचकबहूदकसंन्यासिभ्योऽधिकतया पूजनीयः, स एव परमहंस इति निश्चित्य त्वमपि मदुक्तप्रकारेणात्मानं सम्यक्श्रुत्वा मत्वा ध्यात्वा साक्षात्कृत्य नित्यशुद्धबुद्धमुक्तसत्यपरमानन्दाद्वयब्रह्मरूपेण तिष्ठ। एतावदेवाचार्यैर्वक्तव्यं शिष्येण च श्रोतव्यम्। इतः परं वक्तव्यं श्रोतव्यं च नास्तीति सिद्धम् ॥

॥ इति द्वादशवर्णकम् ॥

॥ इति वासुदेवयतीश्वरकृतं लघुवासुदेवमननप्रकरणम् ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# स्वप्नोदितम्

देशिकानुग्रहोत्तुङ्गतरङ्गशिशिराशयः ।
निवसामि निजानन्दपरिपूर्णैकभूमनि ॥१॥

देशिकानुग्रहोत्तुङ्गमत्तमातङ्गमस्तकम् ।
आरुह्य विहराम्यात्मपदे समरसोज्ज्वले ॥२॥

देशिकानुग्रहोत्तुङ्गगिरिशृङ्गमुपेयुषः ।
तृणवद्भाति मे सर्वं जगदत्यल्पमाततम् ॥३॥

देशिकानुग्रहोदारग्रहग्रस्तात्मवानहम् ।
न किंचिदपि जानामि जगदेतच्चराचरम् ॥४॥

देशिकानुग्रहोदारवेत्रोदस्तमनोग्रहः ।
विजानामि जगत्सर्वमात्ममात्रतयाधुना ॥५॥

देशिकानुग्रहोदारतरणिप्रसरोद्भवे ।
स्वानन्दैकरवं वीक्षे समुल्लसितमद्भुतम् ॥६॥

देशिकानुग्रहोदारतुषारकिरणोदये ।
आश्चर्यमान्तराम्भोजमुन्निद्रमभवन्मम ॥७॥

देशिकानुग्रहोदारदावानलतता भृशम् ।
दग्ध्वाशेषं जगज्जालमलं मां शीतयत्यहो ॥८॥

देशिकानुग्रहोदाररवितप्तमनोमरौ ।
स्वानन्दकन्दलः कश्चिदाश्चर्यमुदभूद्भृशम् ॥९॥

देशिकानुग्रहोदारसमीरे वाति सर्वतः ।
मम चित्तमहाम्भोधिश्चित्रं न स्पन्दते कुतः ॥१०॥

देशिकानुग्रहोदारदारैः संततसङ्गिनः ।
मम भावे मनो लीनं निवृत्ताशेषवृत्तिकम् ॥११॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

देशिकानुग्रहोदारपीताम्बरधरस्य मे ।
शीततापादिभिर्दुःखं कथं संघीभविष्यति ॥१२॥

देशिकानुग्रहोदारसाम्राज्याधिपतेर्मम ।
अशेषमभवद्वश्यमतः किमविशेषवः ॥१३॥

देशिकेन्द्रकृपाखड्गखण्डिताशारिमण्डलः ।
अखण्डितनिजानन्दमण्डले निवसाम्यहम् ॥१४॥

देशिकेन्द्रकृपाखड्गकृत्तचित्तमृगोत्तमः ।
शान्तभीतिश्चराम्यन्तरात्मकान्तारसंततौ ॥१५॥

देशिकेन्द्रकृपाखड्गविलूनेऽज्ञानपादपे ।
संसारघोरवेतालः क्व गतो वा न वेद्म्यहम् ॥१६॥

देशिकेन्द्रकृपाचन्द्रचन्द्रिकाशीतलाकृतिः ।
संसारसौरसंतापं नैवाहं वेद्मि किंचन ॥१७॥

देशिकेन्द्रकृपाचन्द्रसमेधितचिदम्बुधौ ।
निमग्नोऽहं न पश्यामि स्वभिन्नं वस्तु किंचन ॥१८॥

देशिकेन्द्रकृपाचन्द्रनिरस्तान्तस्तमस्ततिः ।
किमप्यहं न पश्यामि किमाश्चर्यमभूदिह ॥१९॥

देशिकेन्द्रकृपाचन्द्रप्रफुल्लानन्दकैरवम् ।
आघ्रायाघ्राय हृष्यामि स्वात्मन्येव मुहुर्मुहुः ॥२०॥

देशिकेन्द्रकृपाचन्द्रद्रुतचन्द्रोपलान्तरः ।
विश्रान्तिमाप्तवानस्मि विज्ञानैकरसे पदे ॥२१॥

कृतार्थोऽस्मि कृतार्थोऽस्मि देशिकानुग्रहादहम् ।
अतः सर्वे जना यूयमुपाद्ध्वं देशिकोत्तमम् ॥२२॥

इति स्वप्नोदितां निष्ठामनुस्मरति यः पुमान् ।
सोऽसौ सत्यपरानन्दपदवीं याति पावनीम् ॥२३॥

॥ इति स्वप्नोदितम् ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

# स्वानुभूतिप्रकाशिका

गौरीपतिपदभजनक्रकचविलूनैकविषयपाशोऽहम् ।
देशिकवरकरुणोदितपरजीवात्मैक्यतत्त्वबोधोऽहम् ॥१॥

प्रशमितनिजमायोऽहं प्रगलितजगदीशजीवभेदोऽहम् ।
प्रत्यगभिन्नपरोऽहं प्रविततसुखपूर्णसंविदेवाहम् ॥२॥

समुदस्ताश्रमकोऽहं विध्वस्ताशेषविधिनिषेधोऽहम् ।
अस्तमिताहन्तोऽहं निस्तुलदृग्रूपवस्तुमात्रोऽहम् ॥३॥

साक्ष्यहमनपेक्षोऽहं पक्षविपक्षादिभेदविधुरोऽहम् ।
सूक्ष्मोऽहमक्षरोऽहं: मोक्षानन्दैकसिन्धुरेवाहम ॥४॥

कूटस्थचेतनोऽहं कुक्षिस्थानेकलोककलनोऽहम् ।
एकोऽहमविकलोऽहं केवलसन्मात्रसारभूतोऽहम् ॥५॥

वेद्योऽहमागमान्तैराद्योऽहं सकलभुवनहृद्योऽहम् ।
विभुरहमनवद्योऽहं शुभतरभावोऽहमप्रभेद्योऽहम् ॥६।

शुद्धोऽहमद्वयोऽहं बुद्धो मुक्तोऽहमद्भुतात्माहम् ।
शोधितपरतत्त्वोऽहं बोधानन्दैकमूर्तिरेवाहम् ॥७॥

शान्तोऽहमान्तरोऽहं संततभातोऽहमन्तकारोऽहम् ।
शमितान्तत्रितयोऽहं शाश्वतविज्ञानसमरसात्माहम् ॥८॥

अजरोऽहमव्ययोऽहं निजमहमनिशं स्थितोऽहमचलोऽहम् ।
अवबोधैकरसोऽहं कविवरसंसेव्यकेवलात्माहम् ॥९॥

निस्त्रैगुण्यपदोऽहं निष्क्रियधामाहमप्रतर्क्योऽहम् ।
निरवयवोऽहमजोऽहं निर्मलनिर्वाणमूर्तिरेवाहम् ॥१०॥

निरवधिनिजबोधोऽहं निरुपमनिःसीमसत्त्वमात्रोऽहम् ।
परमानन्दघनोऽहं परशिव एवाहमनिशमभयोऽहम् ॥११॥

॥ इति स्वानुभूतिप्रकाशिका ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# मनोनियमनम्

आशीविषविषमैर्निमिषोन्मेषैर्निषेवितैर्विषयैः ।
अलमधुना कलयेथाः मानस मिहिकामयूखचूडालम् ॥१॥

अहमिति मतिमतिहेये वारय काये निरन्तरापाये ।
परशिवपदाभिधेयं ब्रह्मणि सदये निधेहि तां हृदये ॥२॥

चलदलदलचञ्चलमिममचलवदचलं प्रतीत्य किल कायम् ।
मुह्यसि शिवपदविमुखं शिवशिवसुमचापचापलैश्चेतः ॥३॥

यातं दिनमिदमेवं श्वः किल भविता सुमेरुरपि हस्ते ।
इति नित्यं भावयता भवता कति चित्त मेरवो लब्धाः ॥४॥

कतिधा हृदनुबभूविथ तरुतृणकृमियोनिचक्रचङ्क्रमणम् ।
दिष्ट्या मानुषभावात्पारस्पृगिवासि मा त्विह प्रमदः ॥५॥

प्राक्कृतभोगावसरे ताम्यसि चेतो मुधा कुतो हेतोः ।
न्यग्रोधबीजमुप्त्वा शोचन्निव नाम्रमस्येति ॥६॥

इज्या तीर्थव्रज्या प्रव्रज्या वा सतां समज्या वा ।
आस्तामयि भवतरणं लघु तव करणं मनः शिवस्मरणम् ॥७॥

परयुवतिदीपिकायामप्रतिरूपं निरीक्ष्य बत रूपम् ।
मोहान्निपत्य चेतः पतङ्ग मा त्वं क्षयं याहि ॥८॥

भवमिषपृथुविषशमनो मानस भिषगेष शंकरः सेव्यः ।
प्रथमो दैव्यो भिषगिति यं किल जननी श्रुतिः स्वयं प्राह ॥९॥

अतिसरसैरन्नरसैर्मानस नभसंगमाग्निभषकाणाम् ।
भुजिकर्मीभूतस्य प्रायो वपुषः किमित्युपस्कुरुषे ॥१०॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

पत्रफलमात्रसुलभे कामितफलदे प्रभौ स्थिते साम्बे ।
भजसे कृपणं नृपशुं दुःसेव्यं हा कथं चेतः ॥११॥

आ प्रातरादिनान्तादा च दिनान्तात्पुनश्चिदा प्रातः ।
व्यापारान्तरहार्यं व्याप्रियतामिन्दुचूडचरणाब्जे ॥१२॥

दुष्पूरकुक्षिपरिपूरणपारवश्या-
त्कर्पूरगौरवपुषं पुरुषं विहाय ।
धन्यं किमाश्रयसि हन्त सखे मनस्त्वं
धन्यं भजस्व सततं तरुणेन्दुचूडम् ॥१३॥

॥ इति मनोनियमनम् ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# श्रीदक्षिणामूर्तिध्यानम्

वटस्याधः कंचित्करकमलचिन्मुद्रमचलं
निटालाक्षं सूक्ष्मं मुनिवरगणासेव्यचरणम् ।
चिदानन्दाकारं मदनहरमापूर्णममलं
सदा ध्यायेदन्तः परमशिवमाचार्यवपुषम् ॥१॥

कैलासशिखरे रम्ये कमनीयमणिप्रभे ।
वटद्रुमतटे नित्यं निवसन्तं जगद्गुरुम् ॥२॥

दक्षिणामूर्तिमीशानं दधतं मौनमुत्तमम् ।
व्यालम्बितजटाकोटिघटितार्धकलाधरम् ॥३॥

फालभूतिलकीभूतरुचिराम्भोजलोचनम् ।
कारुण्यरसपूरैकपूरिताक्षियुगाम्बुजम् ॥४॥

शुक्तिकाकारसंकाशकर्णद्वन्द्वपुटोज्ज्वलम् ।
मणिदर्पणदर्पघ्नकपोलफलकप्रभत् ॥५॥

नवचम्पकपुष्पाभनासादण्डविराजितम् ।
दरहासलसन्मुग्धमुखोन्निद्रसरोरुहम् ॥६॥

दाडिमीबीजसंदोहसंदेहदरदावलिम् ।
बिम्बसंभ्रमधिक्कारिमधुराधरमञ्जुलम् ॥७॥

ग्रीवोदारश्रियोदस्तकम्बुसौभाग्यसंततिम् ।
श्रितकल्पलतीभूतभुजवल्लीचतुष्टयम् ॥८॥

विद्यामुद्राक्षमालैकलसत्पाणियुगाम्बुजम् ।
वीणापुस्तोज्ज्वलोद्दामकरद्वन्दसरोरुहम् ॥९॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

विगूढजत्रुविभ्राजिविपुलोत्तुङ्गवक्षसम् ।
आवर्तनाभिसुभगं त्रिवलीललितोदरम् ॥१०॥

विशङ्कटकटिश्रोणिकरभोरुद्वयोज्ज्वलम् ।
चारुजानुयुगं वल्गुजङ्घायुगलरञ्जितम् ॥११॥

गूढगुल्फारुणनखव्रातदीधितिशोभितम् ।
दशाङ्गुलीदलोदारपदद्वन्द्वसरोरुहम् ॥१२॥

दक्षिणोरूपरिन्यस्तसव्यपादाम्बुसंभवम् ।
अपसव्यपदाम्भोजञ्जितापस्मरं परम् ॥१३॥

योगपट्टाभिरामं तं योगिवृन्दनिषेवितम् ।
पाटरकुन्दचन्द्राभपाण्डराङ्गैकभासुरम् ॥१४॥

चन्दनागरुकर्पूरर्चचितावयवोज्ज्वलम् ।
मन्दारचम्पकाशोकमल्लिकादामभूषितम् ॥१५॥

तटिद्वलयसंकाशमणिकुण्डलमण्डितम् ।
कटकाङ्गदकेयूरहारग्रैवेयकोज्ज्वलम् ॥१६॥

प्रत्युप्तदिव्यमाणिक्यप्रस्फुरन्मेखलावृतम् ।
कलनिस्वनमञ्जीरपदकङ्कणरञ्जितम् ॥१७॥

त्रैलोक्याद्भुतसौन्दर्यपरिपाकमनोहरम् ।
कंदर्पकोटिलावण्यगर्वनिर्वापणाकृतिम् ॥१८॥

कंजासनमहेन्द्रादिकलिताङ्घ्रिसरोरुहम् ।
देवकिन्नरगन्धर्वसंस्तुतोदारवैभवम् ॥१९॥

सकृत्प्रपन्नलोकौघसरोरुहदिवाकरम् ।
संसाराशीविषालढिमृतसंजीवनौषधम् ॥२०॥

परमाद्वैतविज्ञानमहोदधिसुधाकरम् ।
अज्ञानध्वान्तसंतानमार्तण्डोदारमण्डलम् ॥२१॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अनन्तभवकान्तारदहनोग्रदवानलम् ।
मोहानललसज्ज्वालाजालकीलालसागरम् ॥२२॥

संसारसौरसंतापसंतप्तोदारभूरुहम् ।
पञ्चाक्षरदलोल्लासिप्रणवाम्बुजषट्पदम् ॥२३॥

षट्त्रिंशत्तत्त्वसोपानस्वात्मप्रासादभूपतिम् ।
दक्षाध्वरविभेत्तारं शिक्षितान्धकदुःस्थितिम् ॥२४॥

दारितान्तकदौरात्म्यं दलितासुरसंततिम् ।
लीलाविजितकंदर्पं हालाहलधरं हरम् ॥२५॥

पालिताखिलभक्तौघं वेलातीतगुणार्णवम् ।
भृङ्गावलीकालकण्ठं मङ्गलाधारमद्भुतम् ॥२६॥

गङ्गाधरं वृषारूढं संगीतरसशेवधिम् ।
भस्मोद्धूलिनसर्वाङ्गं भवरोगभिषग्वरम् ॥२७॥

भवानीभावनागम्यं भक्तचित्तापहारिणम् ।
नासाञ्चलहिताब्जाक्षं नागाभरणभूषितम् ॥२८॥

वसानं चर्म वैयाघ्रं वैराग्यभरमन्थरम् ।
वीणानादानुसंधानविकसद्वदनाम्बुजम् ॥२९॥

विश्वातीतसुखाम्भोजविलसद्भ्रमराग्रियम् ।
संसारसर्पसंदष्टजनजाङ्गलिकोत्तमम् ॥३०॥

महादेवं महात्मानं महायोगीश्वरेश्वरम् ।
शाश्वतैश्वर्यसंपूर्णं शंकरं लोकशंकरम् ॥३१॥

कारणं जगतामेकमनेकाकारभासुरम् ।
कालत्रयापरिच्छेद्यं कारकग्रामवर्जितम् ॥३२॥

निःसीमपरमानन्दनिजधामनि संस्थितम् ।
[illegible]शुद्धविद्यैकगोचरम् ॥३३॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अविद्याकार्यनिर्मुक्तमवाङ्मनसगोचरम् ।
अद्वयानन्दविज्ञानघनं परमपावनम् ॥३४॥
आदिमध्यान्तरहितमपोहित गुणत्रयम् ।
अवेद्यं जगतां हृद्यमान्तरान्तरमव्ययम् ॥३५॥
निरवद्यं निराभासं निष्क्रियं निरुपप्लवम् ।
निर्विकल्पं निरातङ्कं निःसङ्गं निःसमीहितम् ॥३६॥
निस्त्रैगुण्यफलं किंचिन्निर्वाणसुखसागरम् ।
निर्द्वन्द्वानन्दसंदोहमसंदेहमनूपमम् ॥३७॥
निर्गुणं निष्कलं नित्यं निर्विकारं निरञ्जनम् ।
नीरागं निरुपासङ्गं निरहंकारमक्षरम् ॥३८॥
निष्प्रपञ्चं निरालम्बं निराकारं निराश्रयम् ।
अवबोधरसैकात्म्यं ध्यायेदादिमदेशिकम् ॥३९॥
इति श्रीदक्षिणामुर्तिध्यानं परमपावनम् ।
पुत्रपौत्रायुरारोग्यमहासंपत्प्रदायकम् ॥४०॥
चतुःषष्टिकलाविद्याप्रदं पापप्रणाशनम् ।
अणिमादिमहासिद्धिविधानचतुरं शुभम् ॥४१॥
क्षयगुल्मप्रमेहादिव्याधीनामेकभेषजम् ।
भक्तिज्ञानविरक्तीनां निदानं मुक्तिसाधनम् ॥४२॥
यः पठेच्छृणुयाद्वापि नित्यं भक्तिसमन्वितः ।
सा यथोक्तफलान्यादौ लब्ध्वा मुक्तो भवेद्ध्रुवम् ॥
ब्रह्मादिदेववन्द्याय सर्वलोकाश्रयायते ।
दक्षिणामूर्तिरूपाय शंकराय नमो नमः ॥
शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका ।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम् ॥

॥ इति श्रीदक्षिणामूर्तिध्यानम् ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# नववर्णरत्नमाला

ओंकारैकनिरूप्यं पङ्कजभवनादिभावितपदाब्जम् ।
किंकरकैरवशशिनं शंकरमेकं शिवं कलये ॥१॥

ऐन्द्रं पदमपि मनुते नैव वरं यस्य पदरजःस्पर्शात् ।
सान्द्रसुखोदधिमेकं चन्द्रकलोत्तंसमीशमासेवे ॥२॥

नागेशकृत्तिवसनं वागीशाद्यैकवन्दिताङ्घ्रियुग्मम् ।
भोगीशभूषिताङ्गं भागीकृतसर्वमङ्गलं नौमि ॥३॥

नगराजशिखरवासिनमगजामुखकुमुदकौमुदीनिकरम् ।
गगनशिरोरुहमेकं निगमशिरस्तन्त्रविदितमवलम्बे ॥४॥

मन्दस्मितलसदाननमिन्दुकलोत्तंसमम्बिकासचिवम् ।
कंदर्पकोटिशतगुण सुन्दरदिव्याकृतिं शिवं वन्दे ॥५॥

मस्तक नम कमलाङ्घ्रिं संस्तुहि भो वाणि वरगुणोदारम् ।
हस्तयुगार्चय शर्वं स्वस्थो निवसामि निजमहिम्न्यमुना ॥६॥

क्लिन्नेक्षणमतिकृपया संनुतमहिमानमागमशिरोभिः ।
तं नौमि पार्वतीशं पन्नगवरभूषणोज्ज्वलकराब्जम् ॥७॥

शिशिरारुणकंजदृशं शशिभूषणमेकमगसुताजानिम् ।
पशुपाशपाटनपटुं वशिनं सर्वस्य देशिकं वन्दे ॥८॥

वटविटपिनिकटनिलयं कुटिलजटाघटितहिमकरोदारम् ।
कटिलसितकरटिकृत्तिं निटिलाम्बकमेकमालम्बे ॥९॥

वामाङ्ककलितकान्तं कामान्तकमादिदेवतं दान्तम् ।
भूमानन्दघनं तद्धाम किमप्यन्तरान्तरं भाति ॥१०॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

यदपाङ्गितात्प्रबोधात्पदमलभेऽखण्डितात्ममात्रमहम् ।
सदयं साम्बशिवं तं मदनान्तकमादिदैवतं नौमि ॥११॥

सौस्नातिकममृतजलैः सुस्मितवदनेन्दुसमुदितदिगन्तम् ।
संस्तुतममरगणैस्तं निस्तुलमहिमानमानतोऽस्मि शिवम् ॥१२॥

नववर्णरत्नमालास्तुतिमेतामादिदेशिकेन्द्रस्य ।
धारयतः स्याद्भुक्तिः सकलकलावाप्तिरथ परा मुक्तिः ॥१३॥

॥ इति नववर्णरत्नमाला ॥

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

## आत्मविद्याविलासः (१)

यत्पादपद्ममकरन्दजुषां नराणां
संसारघोरभुजगान्न भवेत्स्म भीतिः।
सच्चिद्घनं सकलसौख्यलवाम्बुराशिं
श्रीदक्षिणाभिमुखमूर्तिमजं भजेऽहम् ॥१॥

एतावदेव खलु पुंभिरवातुमर्हं
यच्चेतसो निलयनं निजतत्त्वबोधे।
आक्रोशनं श्रुतिशिरांशि यदर्थमेव
कुर्वन्ति येन हि भवेत्पुरुषः सुखाब्धिः ॥२॥

मातेव पुत्रमनुबोधयति श्रुतिर्हि
लोकं समस्तमपि योजयितुं सुखेन।
तस्माच्छ्रुतेराभिहितार्थमतन्द्रितेन
चित्तेन साधयितुमत्र जना यतध्वम् ॥३॥

आदाविदं सकलमेव जगत्सदासी-
त्कुम्भादिवत्तदनु शक्तियुतात्परस्मात्।
आकाशवायुदहनाम्बुभुवो बभुवु-
र्वातप्रसक्तसलिलादिव वीचिपूरः ॥४॥

सूक्ष्माख्यभूतगतसत्त्वरजस्तमोभि-
र्लिङ्गं शरीरमुदभूदत ईश्वरेच्छा।
पञ्चीचकार वियदादिकभूतसूक्ष्मा-
ण्यण्डं प्रभूदत इदं सह जीवभोग्यैः ॥५॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सृष्ट्वा जगत्सकलमेवमशेषकर्ता
तत्प्राविशत्पुनरुपागतजीवभावः ।
विस्मृत्य सत्यसुखबोधमयस्वरूपं
भ्रान्त्या भ्रमत्यनिशमस्तविवेकलेशः ।।६।।

इत्थं प्रमादवशतः परिमुह्यमानो
देहात्मबुद्धिपरिकल्पितकर्मबन्धः ।
स्वर्गादिभोगगमनागमनातिखिन्नो
लूतावदेष भवमभ्यगमच्चिदात्मा ।।७।।

मायायुतस्त्वगमदीश्वरतां चिदात्मा
चाविद्यया युगभवद्भृतजीवभाव ।
माया भवेद्विमलसत्त्वगुणप्रधाना
प्रोक्ता मलापिहितसत्त्वगुणा त्वविद्या ।।८।।

एकोऽप्यनेक इव भाति शरीरभेदा-
दात्मा घटादिगतभेदवशाद्वियद्वत् ।
देहेन्द्रियादिषु चलत्सु निजप्रकाशा-
त्पूर्णोऽपि निश्चलतरोऽपि विकारवद्वत् ।।९।।

एवं भवार्णवनिमज्जनदुःखितेषु
लोकेषु पूर्वजनिसंचितपुण्यपुञ्जैः ।
कश्चिद्विशुद्धमतिरेत्य गुरुं कृपाब्धिं
प्राह प्रणम्य भवसागरलङ्घनेच्छुः ।।१०।।

संसारघोरजलधौ भगवन्नपारे
तापत्रयौघदहने सहजारिनक्रे ।
मोहाम्भसि प्रचलदुद्भवमृत्युभङ्गे
वीक्ष्यान्तरस्मि पतितं जगदद्य भीतः ।।११।।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

मातुः स्थितस्य जठरे वचसां च दूरं
दुःखं पुनर्जननकालभवं दुरूह्यम् ।
बाल्येऽपि दुःखमविषह्यमवारणीय-
मालोच्य भीतिरधुना महती ममोत्था ॥१२॥

तारुण्यमेत्य कुलयौवनरूपसंप-
द्विद्यात्मगर्वपिहितात्महिताभिलाषः ।
विण्मूत्रमांसरुधिरास्थिमये शरीरे
नार्या रुचिं समुपयाति जनो विचित्रम् ॥१३॥

सर्वापदां निलयमेत्य वयोऽधिकत्वं
जन्तुः सुखं न लभते ह्यपि किंचिदत्र ।
पुंसामिहास्ति न भयं खलु मृत्युतोऽन्य-
द्धिक्कृत्य संसृतिमिमामभवं विरक्तः ॥१४॥

स्वामिन्कथं मम भवार्णवलङ्घनं स्या-
दायासलेशरहितं वद तत्र हेतुम् ।
श्रुत्वा तु शिष्यवचनं रमणीयमित्थं
प्रत्युत्तरं गुरुरदात्कृतमन्दहासः ॥१५॥

देहेन्द्रियासुहृदयादिकचेत्यवर्गा-
त्प्रत्यक्चितेर्विभजनं भववारिराशेः ।
संतारणे प्लव इति श्रुतिडिण्डिमोऽयं
तस्माद्विचारय जडाजडयोः स्वरूपम् ॥१६॥

प्रत्यक्चितिर्वपुरिदं न भवेज्जडत्वा-
त्कुड्यादिवज्जडतयाप्यसवो न चित्स्युः ।
नापीन्द्रियाणि करणं कुत एव चित्स्या-
त्कुद्दालकादिवदिति प्रविचारय त्वम् ॥१७॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

दृश्यत्वतो न मनसश्च भवेच्चितित्वं
नाहंकृतिश्च परिणामवती चितिः स्यात् ।
बुद्धेरचित्त्वमपि जन्मविनाशवत्त्वा-
च्चित्तं च दृश्यमचिदित्यनुचिन्तय त्वम् ॥१८॥

बुद्ध्वा समस्तमपि दृश्यमचित्स्वरूपं
प्रत्यक्चितिं च निजरूपतया विदित्वा ।
देहेन्द्रियाद्यखिलसाक्ष्यहमित्यजस्रं
संचिन्तय व्यपगताखिलसंशयः सन् ॥१९॥

देहादिकं जगदसज्जडदुःखरूपं
मय्यद्वितीयनिजबोधसदादिरूपे ।
संदृश्यते भ्रमवशाद्गगने निरंशे
गन्धर्वपत्तनमिवेत्यनुभावय त्वम् ॥२०॥

या चित्प्रभा त्वमिति मेयविभासयित्री
यत्संक्रमाद्घटपटाद्यवभासिका धीः ।
आब्रह्मकीटमहमित्यवभासमाना
या सैव संविदिति चिन्तय संततं त्वम् ॥२१॥

जाग्रन्मुखत्रिविधधामसुसाक्षिणी या
जाग्रन्मुखत्रिविधधाम विलक्षणाया ।
स्वप्नाद्यनुस्मृतिबलात्सततैकरूपा
सैवाहमस्मि चितिरित्यवधारय त्वम् ॥२२॥

नोदेति नास्तमुपयाति न वृद्धिमेति
नैवोपयाति परिणाममपक्षयं वा ।
स्वाध्यस्तसर्वजननादिविकारसाक्षि-
ण्येषा हि संविदिति चिन्तय संततं त्वम् ॥२३॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

मच्छेषतां समवलम्ब्य सुतादिसर्वं
येन प्रियं भवति तेन सुखस्वरूपः ।
देहेन्द्रियादिविषयप्रलयैकसाक्षी
यस्मात्ततः सदिति मे निजरूपमास्स्व ॥२४॥

आदौ त्वमेव सदभूरविशेषरूप-
स्त्वत्तोदितं जगदीदं सविशेषजातम् ।
त्वय्येव तिष्ठति तथा त्वयि चावसाने
संलीयते जलनिधाविव बुद्बुदादिः ॥२५॥

व्यापित्वहेतुबलतो न दिशास्ति मेऽन्तो
नित्यत्वहेतुबलतश्च न कालतोऽन्तः ।
सार्वात्म्यहेतुबलतश्च न वस्तुतोऽन्त-
स्तस्मादनन्तमिति मे निजरूपमास्स्व ॥२६॥

एवं निरन्तरसमाधिवशान्निराधि-
र्ज्ञानाग्निदग्धसहकारणजन्मबीजः ।
आविर्भवन्निजसुखानुभवैकतृप्तो
ब्रह्मैव नूनमिह संभवसि ध्रुवं त्वम् ॥२७॥

इत्थं गिरा विमलया परसौख्यदात्र्या
वाचा गुरोर्विमथिताखिलसंशयौघः ।
शिष्यः समाधिपरिशीलनतीक्ष्णदिव्य-
ज्ञानासिखण्डितभवाख्यविषद्रुमोऽभूत् ॥२८॥

स्वानन्दमप्रतिहतं परिभुज्य हर्षा-
दश्रुप्रपूर्णनयनः पुलकाङ्किताङ्गः ।
शिष्यः सगद्गदमुवाच गुरुं घृणाब्धि
नत्वा तदङ्घ्रियुगलं विनयोपयुक्तः ॥२९॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

स्वामिन्भवद्वचनदिव्यसुधाभिषिक्त-
स्वानन्दमञ्जुनगरे विहरामि नित्ये ।
अज्ञानदुर्हृदमतीव शितेन सम्य-
ग्ज्ञानासिना परिविलूय सहानुजातम् ॥३०॥

गच्छामि कुत्र किमहं करवाणि किं वा
गृह्णामि किं परिजहामि मयि प्रपूर्णे ।
निर्व्याजसौख्यजलधौ परिदृश्यमानं
फेनादिकं जगदिति स्थिरनिश्चयो मे ॥३१॥

मायाभिधो जलधरो जगदाख्यमम्बु
वर्षत्वनेन मम चिद्वपुषः क्षतिः का ।
लाभोऽपि वा क इति संततमात्मरूपं
संचिन्तयन्स्थिरमतिर्विहरामि नित्ये ॥३२॥

वाक्कयमानसभवं सकलं हि कर्म
प्रोक्तं शुभाशुभमयं न ततोऽस्ति भिन्नम् ।
वागादिसाक्षिणि कथं मयि निर्मले स्या-
त्कर्मद्वयं तदुदितं जननादिकं वा ॥३३॥

व्यावृत्तरूपमिदमेव जगद्विभिन्नं
ज्ञानं त्वभिन्नमनुवृत्ततयाखिलेषु ।
ज्ञानं च भिन्नमिति चेज्जडतादिदोष-
प्राप्तिर्भवेच्छ्रुतिशिरांसि न तं सहन्ते ॥३४॥

नैवेन्द्रियाणि विषयेषु नियोजयामि
प्राग्वासनावशत एव हि तानि यान्ति ।
स्वान्गोचरान्प्रति ममास्ति न साक्षितापि
सा साक्ष्यभेदकलिता खलु सोऽप्यसत्यः ॥३५॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

भेदोऽपि साक्ष्यगत एव न साक्षिणो मे
भेदस्य साक्षिणि कथं प्रभवेत्स भेदः।
भेदो न सुप्तिसमयेऽनुपलम्भनाच्च
सन्नास्तिता न इह दृष्टतया न वाच्या ॥३६॥

विश्वं सदेतदिति कार्यकरत्वहेतो-
र्यद्यस्य सत्त्वमिह साधयितुं यतेथाः।
तर्ह्यत्र रज्जुभुजगाद्यपि सद्बलात्स्या-
त्सत्यत्वहेतुरिदमाहुरबाधितत्वम् ॥३७॥

कीदृग्विधं जगदये वद सत्त्वचित्त्वा-
द्याकारहीनमिति पृष्टवतेऽस्ति मह्यम्।
प्रत्युत्तरं किमिति ते तव मौनमेव
प्रत्युत्तरं भवति मां प्रति गच्छ जाल्म ॥३८॥

ज्ञानाग्निदग्धमपि भाति जगद्विचित्रं
यच्च ध्वनिभ्रमवतः सविशेषबोधात्।
तस्मिन्भ्रमे विमथितेऽपि तथैव भाति
दिग्वत्यथो मम च तद्वदतो द सत्तत् ॥३९॥

भूमिं जले तदपि तेजसि तच्च वायौ
तं व्योम्नि तत्त्रिगुणया सह मय्यनन्ते।
पूर्णे विलाप्य परिशिष्टमखण्डसंवि-
त्स्वानन्दरूपमनुभूय रमेऽहमद्य ॥४०॥

अज्ञानतन्निरसने मयि बोधरूपे
स्यातां कथं तिमिरतद्धिरती इवार्के।
बन्धश्च मोक्ष इति कल्पनमप्यसत्यं
भ्रान्त्यैव भ्रात्यखिलसाक्षिणि नित्यमुक्ते ॥४१॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

आरब्धकर्मणि च भोगत एव नष्टे
प्राणादयोऽपि मम नोत्क्रमितुं समर्थाः।
तप्ताग्निनिष्ठजतुवन्मयि पूर्णबोधे
लीनाभवन्ति न पुनर्जननादिकं स्यात् ॥४२॥

आम्नायमस्तकसुसंस्कृतवैभवोऽहं
व्योम्नोऽपि पूर्णतममूर्तिरहं स्थितोऽहम्।
सर्वालयोऽहमहमाद्यवभासकोऽहं
वागाद्यगोचरसदोदितसौख्यकोऽहम् ॥४३॥

इति श्रीसदाशिवेन्द्रसरस्वत्या विरचित आत्मविद्याविलासः संपूर्णः ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# आत्मविद्याविलासः (२)

चिन्मुद्रितकरकमलं चिन्तितभक्तेष्टदं विमलम् ।
गुरुवरमाद्यं कंचन निरवधिकानन्दनिर्भरं वन्दे ॥

वटतरुनिकटनिवासं पटुतरविज्ञानमुद्रितकराब्जम् ।
कंचन देशिकमाद्यं कैवल्यानन्दकन्दलं वन्दे ॥१॥

निरवधिसंसृतिनीरधिनिपतितजनतारणस्फुरन्नौकाम् ।
परमतभेदनघुटिकां परमशिवेन्द्रार्यपादुकां नौमि ॥२॥

देशिकपरमशिवेन्द्रादेशवशोद्बुद्धदिव्यमहिमाहम् ।
स्वात्मनि विश्रान्तिकृते सरसं प्रस्तौमि किञ्चिदिदम् ॥३॥

निरुपमनित्यनिरीहो निष्कलनिर्मायनिर्गुणाकारः ।
विगलितसर्वविकल्पः शुद्धो बुद्धश्चकास्ति परमात्मा ॥४॥

स्वाविद्यैकनिबद्धः कुर्वन्कर्माणि मुह्यमानः सन् ।
दैवाद्विधूतबन्धः स्वात्मज्ञानान्मुनिर्जयति ॥५॥

मायावशेन सुप्तो मध्ये पश्यन्सहस्रशः स्वप्नान् ।
देशिकवचःप्रबुद्धो दीव्यत्यानन्दवारिधौ कोऽपि ॥६॥

प्राकृतभावमपास्य स्वीकृतनिजरूपसच्चिदानन्दः ।
गुरुवरकरुणापाङ्गाद्गौरवमापाद्य माद्यति प्राज्ञः ॥७॥

श्रीगुरुकृपया सच्चित्सुखनिजरूपे निमग्नधीर्मौनी ।
विहरति कश्चन विबुधः शान्ताहंतो नितान्तमुदितान्तः ॥८॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

गुरुवरकरुणालहरीव्यतिकरभरशीतलस्वान्तः ।
रमते यतिवर एको निरुपमसुखसीमनि स्वैरम् ॥९॥

श्रीदेशिकवरकरुणारविकरसमपोहितान्तरध्वान्तः ।
विहरन्मस्करिवर्यो निरवधिकानन्दनीरधावास्ते ॥१०॥

जनिविपरीतक्रमतो बुद्ध्या प्रविलाप्य पञ्च भूतानि ।
परिशिष्टमात्मतत्त्वं पश्यन्नास्ते मुनिः शान्तः ॥११॥

जगदखिलमिदमसारं मायिकमेवेति मनसि मन्वानः ।
पर्यटति पाटिताशः प्रगलितमदमानमत्सरः कोऽपि ॥१२॥

नात्मनि किंचिन्माया तत्कार्यं वास्ति वस्तुतो विमले ।
इति निश्चयवानन्तर्हृष्यत्यानन्दनिर्भरो योगी ॥१३॥

त्वमहमभिमानहीनो मोदितनानाजनाचारः ।
विहरति बालवदेको विमलसुखाम्भोनिधौ मग्नः ॥१४॥

अवधूतकर्मजालो जडवधिरान्धोपमः कोऽपि ।
आत्मारामो यतिराडटवीकोणेष्वटन्नास्ते ॥१५॥

शान्त्या दृढोपगूढः शान्तसमस्तान्यवेदनोदारः ।
रमते रसज्ञ एको रम्ये स्वानन्दपर्यङ्के ॥१६॥

उन्मूलितविषयारिः स्वीकृतवैराग्यसर्वस्वः ।
स्वात्मानन्दमहिम्नि स्वाराज्येऽस्मिन्विराजते यतिराट् ॥१७॥

सवितर्यपि शीतरुचौ चन्द्रे तीक्ष्णेऽप्यधो वहत्यग्नौ ।
मायिकमिदमिति जानन् जीवन्मुक्तो न विस्मयी भवति ॥१८॥

अज्ञानवैरिविजयी प्रज्ञामातङ्गमस्तकारूढः ।
विहरति संयमिराजः समरससुखधाम्नि सर्वतो रम्ये ॥१९॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

शान्ताहंकृतिदोषः सुसमाहितमानसः कोऽपि ।
पूर्णेन्दुशिशिरभावो राजत्यानन्दसत्यचिद्रसिकः ॥२०॥

तिष्ठन्परत्र धाम्नि स्वीयसुखास्वादपरवशः कश्चित् ।
क्वापि ध्यायति कुहचिद्गायति कुत्रापि नृत्यति स्वैरम् ॥२१॥

अगृहीताघकलङ्कः प्रशमितसंकल्पविभ्रमः प्राज्ञः ।
न्यक्कृतकार्यकलापस्तिष्ठत्यापूर्णसीमनि क्वापि ॥२२॥

चपलं मनःकुरङ्गं चारु गृहीत्वा विमर्शवागुरया ।
निगमारण्यविहारश्रान्तः शेते स्वधाम्नि कोऽप्येकः ॥२३॥

दारुणचित्तव्याघ्रं धीरमनःखड्गधारया हत्वा ।
अभयारण्ये कोऽपि स्वैरविहारी जयत्येकः ॥२४॥

सज्जनहृदयसरोजोन्मीलनकरधीकरप्रसरः ।
एको यतिवरपूषा निर्दोषश्चरति चिद्गगने ॥२५॥

कुवलयविकासकारणमज्ञानध्वान्तकौमुदीप्रज्ञः ।
शुद्धो मुनीन्द्रचन्द्रः सुरसेव्ये लसति विष्णुपदे ॥२६॥

स्वानन्दामृतसेकैरान्तरसंतापसंततिं शमयन् ।
चित्रमचञ्चलवृत्तिश्चिद्व्योमनि भाति योगिवर्यघनः ॥२७॥

सुमनःसौरभमञ्जुलसंचारनिवारिताखिलश्रान्तिः ।
संयमिचारुसमीरो विहरत्यानन्दसंविदारामे ॥२८॥

निःश्रेयससरसफले निर्मलविज्ञानपल्लवमनोज्ञे ।
वीतभये विपिनतले यतिशितिकण्ठो विभाति कोऽप्येकः ॥२९॥

निःसारभुवनमरुतलमुत्सार्यानन्दसारसंपूर्णे ।
वरसरसि चिन्मयेऽस्मिन्परहंसः कोऽपि दीव्यति स्वैरम् ॥३०॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

निखिलागमपल्लविते निगमशिरस्तन्त्रशीतलोद्याने ।
मधुरतरमञ्जुवाचः कूजन्नास्ते यतीन्द्रकलकण्ठः ॥३१॥

दारितमोहमदेभो दूरीकृतसकलदुरितशार्दूलः ।
विबुधोत्तमसिंहवरो विहरत्यानन्दविततकान्तारे ॥३२॥

अज्ञानमृगवरोज्झितविज्ञानोत्तुङ्गशृङ्गशिखरितले ।
मतिसलिलशीतलाङ्गो यतिमदकलभो विराजते विहरन् ॥३३॥

नासाञ्चलनिहिताक्षो नामादिभ्यो निवर्तितस्वान्तः ।
तटिनीतटेषु तत्त्वं ध्यायन्नास्ते यतिः कोऽपि ॥३४॥

आशावसनो मौनी नैराश्यालंकृतिः शान्तः ।
करतलभिक्षापात्रस्तरुतलनिलयो मुनिर्जयति ॥३५॥

भूतलमृदुतरशय्यः शीतलवातैकचामरः शान्तः ।
राकाहिमकरदीपो राजति यतिराजशेखरः कोऽपि ॥३६॥

विजननदीकुञ्जगृहे मञ्जुलपुलिनैकमञ्जुतरतल्पे ।
शेते कोऽपि यतीन्द्रः समरससुखबोधवस्तुनिस्तन्द्रः ॥३७॥

विपुलशिलातलफलके विमलसरिद्वारिपरिवृतोदारे ।
मन्दं मलयजपवने वाति प्रस्वपिति कोऽपि यतिराजः ॥३८॥

आन्तरमेकं किञ्चित्सन्ततमनुसंदधन्महामौनी ।
करपुटभिक्षामश्नन्नटति हि वीथ्यां जडाकृतिः कोऽपि ॥३९॥

प्रविलाप्य जगदशेषं परिशिष्टाखण्डवस्तुपरतन्त्रः ।
प्राश्नाति कबलमास्ये प्राप्तं प्रारब्धकर्मणा कोऽपि ॥४०॥

निन्दति किमपि न योगी नन्दति नैवापरं किमप्यन्तः ।
चन्दनशीतलहृदयः कन्दलितानन्दमन्थरस्त्वास्ते ॥४१॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

संत्यज्य शास्त्रजालं संव्यवहारं च सर्वतस्त्यक्त्वा ।
आश्रित्य पूर्णपदवीमास्ते निष्कम्पदीपवद्योगी ॥४२॥

तृणपङ्कचर्चिताङ्गस्तृणमिव विश्वं विलोकयन्योगी ।
विहरति रहसि वनान्ते विजरामरभूम्नि विश्रान्तः ॥४३॥

पश्यति किमपि न रूपं न वदति न शृणोति किञ्चिदपि वचनम् ।
तिष्ठति निरुपमभूमनि निष्ठामवलम्ब्य काष्ठवद्योगि ॥४४॥

जात्यभिमानविहीनो जन्तुषु सर्वत्र पूर्णतां पश्यन् ।
गूढं चरति यतीन्द्रो मूढवदखिलागमार्थतत्त्वज्ञः ॥४५॥

उपधाय वाहुमूलं परिधायाकाशमवनिमास्तीर्य ।
प्रस्वपिति विरतिवनितां परिरभ्यानन्दपरवशः कोऽपि ॥४६॥

गतभेदवासनाभिः स्वप्रज्ञोदारवारनारीभिः ।
रमते सह यतिराजस्त्वय्यन्तान्तःपुरे कोऽपि ॥४७॥

वैराग्यविपुलमार्गं विज्ञानोद्दामदीपिकोद्दीप्रम् ।
आरुह्य तत्त्वहर्म्यं भुक्त्या सह मोदते मुनिराट् ॥४७॥

विजनतलोत्पलमालां वनितावैतृष्ण्यकल्पवल्लीं च ।
अवसान्यामृतघुटिकामात्मज्ञः कोऽपि गृह्णाति ॥४९॥

न निषेधति दोषधिया गुणवुद्ध्या वा न किंचिदादत्ते ।
आविद्यकमखिलमिति ज्ञात्वोदास्ते मुनिः कोऽपि ॥५०॥

भूतं किमपि न मनुते भावि च किंचिन्न चिन्तयत्यन्तः ।
पश्यति न पुरोवर्त्यपि वस्तु समस्तार्थसमरसः कोऽपि ॥५१॥

निगृहीताखिलकरणो निर्मृष्टाशेषविषयेहः ।
तृप्तिमनुत्तमसीमां प्राप्तः पर्यटति कोऽपि यतिवर्यः ॥५२॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

संत्यजति नोपपन्नं नासंपन्नं च वाञ्छति क्वापि
स्वस्थः शेते यतिराडान्तरमानन्दमनुभवन्नेकः ॥५३॥

काममपि विमलां पदवीमासाद्यानन्दसंविदुन्निद्राम् ।
आस्ते भिक्षुक एको विहरान्निर्मुक्तवन्धः स्वैरम् ॥५४॥

वस्तुन्यस्तमिताखिलविश्वविहारे विलीनमनाः ।
राजति परानपेक्षो राजाखिलवीतरागाणाम् ॥५५॥

आचार्यापाङ्गदृशा समवाप्तापारसंविदाकारः ।
प्रशमितसकलविभेदः परहंसः कश्चिदाभाति ॥५६॥

वर्णाश्रमव्यवस्थामुत्तीर्य विधूय विध्यादीन् ।
परिशिष्यते यतीन्द्रः परिपूर्णानन्दबोधमात्रेण ॥५७॥

क्षयमुपनीय समस्तं कर्म प्रारब्धमुपभुज्य ।
प्रविगलितदेहवन्धः प्राज्ञो ब्रह्मैव केवलं भवति ॥५८॥

स्तिमितमनन्तमनाख्यं संततमतुलानन्दबोधघनम् ।
अविकल्पमाद्यमेकं सन्मात्रं विद्यते किमपि ॥५९॥

अक्षरमजरमजातं सूक्ष्मतरापूर्वशुद्धविज्ञानम् ।
प्रगलितसर्वक्लेशं परतत्त्वं वर्तते किमपि ॥६०॥

सुखतरममरमदूरं सारं संसारवारिधेस्तीरम् ।
समरसमभयमपारं सत्किंचन दीप्यते तत्त्वम् ॥६१॥

अरसमगन्धमरूपं विरजस्कमसत्त्वमतमस्कम् ।
निरुपमनिर्भयतत्त्वं तत्किमपि द्योतते नित्यम् ॥६२॥

इति गुरुकरुणापाङ्गादार्याभिद्व्यधिकषष्टिसंख्याभिः ।
निरवद्याभिरवोचं निगमशिरस्तन्त्रसारभूतार्थम् ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

गदितमिमात्मविद्याविलासमनुवासरं स्मरन्विबुधः ।
परिणतपरात्मविद्यः प्रपद्यते सपदि परमार्थम् ॥

परमशिवेन्द्रश्रीगुरुशिष्येणेत्थं सदाशिवेन्द्रेण ।
रचितेयमात्मविद्याविलासनामा कृतिः पूर्णा ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीपरमशिवेन्द्र-
सरस्वतीपादाब्जसेवापरायणश्रीसदाशिवेन्द्रसरस्वत्या
विरचितः आत्मविद्याविलासः समाप्तः ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

# आत्मानुसंधानम्

त्र्यन्ततति संसिद्धशुद्धविद्येकगोचरः ।
अनाद्यन्तः परात्मासौ जयत्यानन्दसुन्दरः ॥१॥

श्रीमत्परशिवेन्द्रश्रीदेशिकानां वयं मुदा ।
अद्वैतानन्दमाध्वीकमङ्घ्रिपद्ममुपास्महे ॥२॥

श्रीदेशिकोक्तवेदान्तनामसाहस्रमध्यगान् ।
कांश्चिन्नाममणीन्पद्यदामभिर्ग्रथयाम्यहम् ॥३॥

अच्युतोऽहमनन्तोऽहमतर्क्योऽहमजोऽस्म्यहम् ।
अव्रणोऽहमकामोऽहमसङ्गोऽस्म्यभयोऽस्म्यहम् ॥४॥

अशब्दोऽहमरूपोऽहमस्पर्शोऽस्म्यहमव्ययः ।
अरसोऽहमगन्धोऽहमनादिरमृतोऽस्म्यहम् ॥५॥

अक्षरोऽहमलिङ्गोऽहमजरोऽस्म्यकलोऽस्म्यहम् ।
अप्राणोऽहममूर्तोऽहमचिन्त्योऽस्म्यकृतोऽस्म्यहम् ॥६॥

अन्तर्याम्यहमग्राह्योऽनिर्देश्योऽहमलक्षणः ।
अगोत्रोऽहममात्रोऽहमचक्षुष्कोऽस्म्यवागहम् ॥७॥

अदृश्योऽहमवर्णोऽहमखण्डोऽस्म्यहमद्भुतः ।
अश्रुतोऽहमदृष्टोऽहमन्वेष्टव्योऽमरोऽस्म्यहम् ॥८॥

अवायुरस्म्यनाकाशोऽतेजस्कोऽव्यभिचार्यहम् ।
अमतोऽहमजातोऽहमतिसूक्ष्मोऽविकार्यहम् ॥९॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अरजस्कोऽतमस्कोऽहमसत्त्वोऽस्म्यगुणोऽस्म्यहम् ।
अमायोऽनुभवात्माहमनन्योऽविषयोऽस्म्यहम् ॥१०॥

अद्वैतोऽहमपूर्वोऽहमबाह्योऽहमनन्तरः ।
अश्रोत्रोऽहमदीर्घोऽहमव्यक्तोऽहमनामयः ॥११॥

अद्वयानन्दविज्ञानघनोऽस्म्यहमविक्रियः ।
अनिच्छोऽहमलेपोऽहमकर्तास्म्यहमक्षयः ॥१२॥

अविद्या कार्यहीनोऽहमवाङ्मनसगोचरः ।
अनल्पोऽहमशोकोऽहमविकल्पोऽस्म्यतिज्वलन् ॥१३॥

आदिमध्यान्तहीनोऽहमाधारोऽस्म्यहमाततः ।
आत्मचैतन्यरूपोऽहमहमानन्दचिद्घनः ॥१४॥

आनन्दामृतरूपोऽहमात्मसंस्थोऽहमान्तरः ।
आप्तकामोऽहमाकाशात्पर आत्मेश्वरोऽस्म्यहम् ॥१५॥

ईशानोऽस्म्यहमीड्योऽहमहमुत्तमपूरुषः ।
उत्कृष्टोऽहमुपद्रष्टाहमुत्तरतरोऽस्म्यहम् ॥१६॥

केवलोऽहं कविः कर्माध्यक्षोऽहं करणाधिपः ।
गुहाशयोऽहं गुप्तोऽहं चक्षुवश्चक्षुरस्म्यहम् ॥१७॥

चिन्दानन्दोऽस्म्यहं चेता चिद्घनश्चिन्मयोऽस्म्यहम् ।
ज्योतिर्मयोऽस्म्यहं ज्यायाञ्ज्योतिषां ज्योतिरस्म्यहम् ॥१८॥

तमसः साक्ष्यहं तुर्यात्तुर्योऽहं तमसः परः ।
दिव्यो देवोऽस्मि दुर्दर्शो द्रष्टा ध्येयो ध्रुवोऽस्म्यहम् ॥१९॥

नित्योऽहं निरवद्योऽहं निष्क्रियोऽस्मि निरञ्जनः ।
निर्मलो निर्विकल्पोऽहं निराख्यातोऽस्मि निश्चलः ॥२०॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

निर्विकारो नित्यपूतो निर्गुणो निःस्पृहोऽस्म्यहम् ।
निरिन्द्रियो नियन्ताहं निरपेक्षोऽस्मि निष्कलः ॥२१॥

पुरुषः परमात्माहं पुराणः परमोऽस्म्यहम् ।
परावरोऽस्म्यहं प्रज्ञाप्रपञ्चोपशमोऽस्म्यहम् ॥२२॥

परामृतोऽस्म्यहं पूर्णः प्रभुरस्मि पुरातनः ।
पूर्णानन्दैकबोधोऽहं प्रत्यगेकरसोऽस्म्यहम् ॥२३॥

प्रज्ञात्माहं प्रशान्तोऽहं प्रकाशः परमेश्वरः ।
बहुधा चिन्त्यमानोऽहमहं ब्रह्मादिवन्दितः ॥२४॥

बुद्धोऽहं भूतपालोऽहं भारूपो भगवानहम् ।
महादेवो महानस्मि महाज्ञेयो महेश्वरः ॥२५॥

विमुक्तोऽहं विभुरहं वरेण्यो व्यापकोऽस्म्यहम् ।
वैश्वानरो वासुदेवो विश्वतश्चक्षुरस्म्यहम् ॥२६॥

विश्वाधिकोऽहं विशदो विष्णुर्विश्वकृदस्म्यहम् ।
शुद्धोऽस्मि शुक्रः शान्तोऽहं शाश्वतोऽस्मि शिवोऽस्म्यहम् ।२७॥

सर्वभूतान्तरात्माहमहमस्मि सनातनः ।
सर्वेश्वरोऽहं सर्वज्ञः सूक्ष्मः सर्वगतोऽस्म्यहम् ॥२८॥

अहं सकृद्विभातोऽहं स्वे महिम्नि प्रतिष्ठितः ।
सर्वान्तरः स्वयंज्योतिः सर्वाधिपतिरस्म्यहम् ॥२९॥

सर्वभूताधिवासोऽहं सर्वव्यापी स्वराडहम् ।
समस्तसाक्षी सर्वात्मा सर्वभूतागुहाशयः ॥३०॥

सर्वेन्द्रियगुणाभासः सर्वेन्द्रियविवर्जितः ।
स्थानत्रयव्यतीतोऽहं सर्वानुग्राहकोऽस्म्यहम् ॥३१॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सच्चिदानन्दपूर्णात्मा सर्वप्रेमास्पदोऽस्म्यहम् ।
सच्चिदानन्दमात्रोऽहं स्वप्रकाशोऽस्मि सद्घनः ॥३२॥

सत्यस्वरूपः सन्मात्रः सिद्धः सर्वात्मकोऽस्म्यहम् ।
सर्वाधिष्ठानसन्मात्रस्वात्मा बन्धहरोऽस्म्यम् ॥३३॥

सर्वग्रासोऽस्म्यहं सर्वद्रष्टा सर्वानुभूरहम् ।
स्वतन्त्रोऽस्मि सुविस्पष्टः सुविभातोऽस्म्यहं हरिः ॥३४॥

अहं हरो हृदिस्थोऽहं हेतुदृष्टान्तवर्जितः ।
क्षेत्रज्ञः परमात्माहं श्रीमद्दैषिकसूक्तितः ॥३५॥

इत्थमात्मानुसंधानपरो यः पुरुषो भवेत् ।
सोऽविद्याक्लेशनिर्मुक्तो ब्रह्मैव भवति स्वयम् ॥३६॥

॥ इत्यात्मानुसंधानं समाप्तम् ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# ब्रह्मानन्दविलासः

नत्वा गुरुवरचरणान् नानामोहान्धकारखरकिरणान् ।
ब्रह्मानन्दविलासं ब्रह्मवदीड्यं करोमि सोल्लासम् ॥१॥

हित्वा दृश्यात्मरतिं मत्वा प्रत्यञ्चमद्वितीयचितिम् ।
त्यक्त्वा विषयाभिरतिं धृत्वोदास्ते मुनिश्शिवात्ममतिम् ॥२॥

निर्मूलितविषयाशा निस्त्रैगुण्यात्मरमणबद्धाशाः ।
शाटीभवद्दशाशाः शान्ता भुवि शेरते गलत्पाशाः ॥३॥

मायाकादंबिन्यां वर्षन्त्यामण्डवुद्बुदानि मुहुः ।
लीनान्युत्पन्नानि स्वात्मनि पश्यन्नुदास्त इह कोपि ॥४॥

गुरुचरणकमलनावा तीर्त्वा मोहार्णवं महायोगी ।
पूर्णो वीक्ष्योदास्ते विषयविषांभोधिमगमूर्खौघम् ॥५॥

निष्कलनिष्क्रियनिर्गुणनित्यानन्दैकरसमहादेवे ।
नित्यं निलीनभावा नयन्ति दिवसान्महानुभावा हि ॥६॥

निगमशिखानिष्णातो निरुपमनैस्पृह्यकवचितस्वान्तः ।
विहरत्यगाधबोधो विश्वाधिकचरणसरसिजासक्तः ॥७॥

ममकाराहंकारौ महिलाकनकाङ्गगोचरौ मुक्त्वा ।
माद्यत्यात्मारामो महामनाः कोपि परमहंसमणिः ॥८॥

अन्नमयादिममानन्दमयान्तं स्फोरयन् शिवः कोशम् ।
अहमित्यवबुद्ध्यास्ते हसन् जनं मोहसंकुलं मौनी ॥९॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

जननीजनकसहोदरकलत्रकनकादिपाशमुच्छिद्य ।
क्रीडति विरतिकरेण्वा कृपया शम्भोर्यमीन्द्रकरिकलभः ॥१०॥

सत्यसुखबोधसान्द्रे समरससम्पूर्णशाश्वताखण्डे ।
सर्वागमान्तसारे साक्षिणि साम्बे सदावलीयेऽहम् ॥११॥

बधिरान्धमूकजडवद्बाह्यव्यवहारबाह्यभावानाम् ।
ब्रह्मानुभूतिलहरीबहुलितमनसां भवेद्भवो भर्ता ॥१२॥

अद्वयपरमशिवामृतमंगलमापीय हरति मोहतृषम् ।
कोपि यमिसार्वभौमः कोरकितानन्दबोधसर्वस्वः ॥१३॥

शिव शिव शिवानुभूत्या शिथिलितसंमोहविलसितो योगी ।
शीतकरशीतलान्तःकरणशीतोष्णसमदृगध्यास्ते ॥१४॥

निष्कामो निष्क्रोधो निर्लोभो निर्मदश्च निर्मोहः ।
निर्मत्सरो यतीन्द्रो नित्यानन्दो यतिर्जयति ॥१५॥

विगलितदेहाहंतो विद्यासंपन्नपरशिवाहन्तः ।
निर्धूतकनककान्तो निर्वृतिसर्वस्वभाजनं शान्तः ॥१६॥

संन्यस्तसर्वकर्मा धन्यस्तरुणेन्दुचूडरतिवर्मा ।
विन्यस्तविविधनर्मा सुन्यस्तमना मुनिर्महाशर्मा ॥१८॥

कुर्वंति सौहार्दं वा दौरात्म्यं वा मुहुर्मुहुर्जन्तौ ।
साम्यं कलयन्नास्ते साक्षिशिवात्मैकबोधनिस्तन्द्रः ॥१८॥

मायामत्सरविकलैर्माधवमारारिभेददूरगतैः ।
अतिवाह्यन्ते दिवसा अखण्डचैतन्यसंश्रयैर्यतिभिः ॥१९॥

अजरामराभयात्मनि हर्षविषादानभिज्ञविज्ञेये ।
लीनान्तरङ्गवृत्तिनि लिखितप्रतिमेव विद्यते मौनी ॥२०॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

मुमुदिपुरानन्दाब्धौ मुञ्चन् वर्णाश्रमादिनिर्बन्धम् ।
प्राप्तपरहंसभावः प्राज्ञः परबोधढौकितो जयति ॥२१॥

कान्ताहेम्नोर्विमुखो वान्ताशन इव शुनो भृशं शान्तः ।
भ्रान्तश्च कोप्यवासा दान्तः पर्यटति भुव्यसंभ्रान्तः ॥२२॥

अतिलंघ्य विधिनिषेधावागमयाथात्म्यबोधलीढमनाः ।
अवधूतविषयगन्धो हन्त पुरारेर्दयाबलादस्मि ॥२३॥

शिवकरुणयेव कोपि श्रीविलसितमखिलमगणयन् धीरः ।
शिशुरिव विशुद्धभावः शिथिलितमानो विराजते मौनी ॥२४॥

निर्धूतनिखिलकर्मा निरवधिकानन्दबोधकृतवर्मा ।
गुरुकरुणाकृतशर्मा गूढं पर्यटति कोपि शमधर्मा ॥२५॥

तृणकणितस्वाराज्यः अत्यन्ताकूतबोधसाम्राज्यः ।
सज्जनकदंबपूज्यो जयति मुनिश्शान्तिचातुरीराज्यः ॥२६॥

विष इव विषये विमुखो विद्यासाम्राज्यमनुभवन्नेकः ।
न जिहासति नोपादित्सति रूपं नाम वा मौनी ॥२७॥

निन्द्यो वा वन्द्यो वा देहो नात्मेति निश्चितस्वान्तः ।
पर्यटति बालवद्वा पिशाचवद्वापि कोपि परहंसः ॥२८॥

क्वचिदीडितो जनौघैः क्वचन खलैर्निन्दितो हसन्मूकः ।
क्रीडति परचिद्गहने कृतान्तपरिपन्थिकरुणया योगी ॥२९॥

पात्रितपाणिपुटानां वसनितहरितां विनीतरागाणाम् ।
शोच्यः स्वराडपि स्यात् शुद्धचिदानन्दचेतसां यमिनाम् ॥३०॥

स्वपराभिमानहीनः स्वात्मानन्दांबुधौ सदा मग्नः ।
कुहचिद्गायति नृत्यति कुत्रचिदानन्दनिर्भरः शेते ॥३१॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अस्तमितभेदमोहैस्त्वधूतविशेषविषयसंसर्गैः ।
उदभावि परमहंसैरुन्मस्तकवस्तुसंविदानन्दैः ॥३२॥

सद्घनमानन्दघनं बोधघनं विधुतलौकिकापघनम् ।
ब्रह्मैवाहं भगवद्वुद्ध्याद्यवभासनं शिवं शान्तम् ॥३२॥

कल्याणाकल्याणे क्रिये निजाज्ञानजृंभिते मुक्त्वा ।
पूर्णानन्दसदाशिवपुष्कलबोधो विराजते योगी ॥३४॥

ब्रह्माण्डपण्डजलधिं ब्रह्मात्मैक्यावबोधवडवाग्नौ ।
जुह्वति कतिचिद्धीरा जुह्वा वुद्धया यमीश्वराध्वरिणः ॥३५॥

विदुषि गवि करिणि शुनि च श्वपचे समवुद्धयः शिवाचाराः ।
परहंसा विहरन्ति प्रशिथिलमोहाः पिनाकिनः कृपया ॥३६॥

उपनिषदैदंपर्यैरुडुपरिवृढडिंभशेखरैरस्मि ।
उपजीवितपरिचितधीरुरगाभरणैर्महोमिरतिशुभ्रैः ॥३७॥

परिमितपामरसंगः परतत्त्रस्फूर्तिपारवश्येन ।
विस्मृतशरीरयात्रो विराजते कोपि वीतरागमणि ॥३८॥

तीव्रतरविरतिनावा तीर्त्वा विषयांवुधिं महाधीरः ।
तृणवत्त्रिजगच्छ्रियमपि न गणयति स्वैरविहरणः कोपि ॥३९॥

समलोष्टकाञ्चनानां सर्वातीते पदे रमताम् ।
सरसिजभवनश्रीरपि साम्यं न वहति हि सौख्यलेशस्य ॥४०॥

समवुद्धिलब्धसौख्यस्सत्यास्तेयादिसुगुणकृतसख्यः ।
शमधनयमिवरमुख्यः शंकरकृपयास्मि परमहंसाख्यः ॥४१॥

दिव्यमिह किमपि तत्वं द्रागद्राक्षं तु दैशिकादेशात् ।
सुचरितविपाकसुरतरुसुलब्धनैस्पृह्यधैर्यनैष्कर्म्यैः ॥४२॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अनिदंरूपमखण्डितमखिलाम्नायान्तसारसर्वस्वम् ।
अजरामराभयात्मकमहमित्यवगत्य हृष्यति महात्मा ॥४३॥

भूतं भावि च भवदपि भगवन्मायेति बुधमुखाद्बुद्धा ।
आध्वं स्वस्थास्सततं बाध्व इवानन्दबोधनिष्यन्दाः ॥४४॥

निर्मत्सरधौरेयो निखिलं विश्वं विभावयन् ब्रह्म ।
नैश्चिन्त्यसौधमध्ये नैजमहत्वज्ञशेखरः शेते ॥४५॥

चिदहमिति चिन्तयन्तश्चिरमिह निष्कम्पदीप इव निपुणाः ।
निष्ठानिलीनमनसो निस्पृहतिलका जयन्ति परहंसाः ॥४६॥

तृणकणितसार्वभौमस्त्रुटिताहन्तस्तनौ महामौनी ।
स्वच्छन्दवृत्तिललितस्स्वैरं पर्यटति सर्वतो योगी ॥४७॥

गगनमिव शून्यभावो गभीरवृत्तिर्महासमुद्र इव ।
अचल इव चाप्रकंप्यो हृतमात्सर्यो विराजते हंसः ॥४८॥

निश्शेषितनिखिलाशो निरुपाधिकसत्वबोधसौभाग्यः ।
निश्चिन्तचक्रवर्ती निगमान्ताकूतविद्यया जयति ॥४९॥

किमपि च विचिन्तयन्तः कृशानुरेतःकृपावशात्केपि ।
किं यशसा किं तपसा किं नाकेनेति कुर्वते वादान् ॥५०॥

यदि परतत्वानुभवो यदि गुरुचरणारविन्दशुश्रूषा ।
घटते शरीरभाजां किमिति विमुह्यन्ति दग्धसंसारे ॥५१॥

स्त्रीणामवाच्यदेशे क्लिन्नशिराग्रन्थिरन्ध्रपर्याये ।
मग्नमनोभिर्मूर्खैर्महत्वमज्ञातमात्मनो नूनम् ॥५२॥

महिलाख्यवागुराभिर्मदनव्याधो मृगान् पुंसः ।
आबद्ध्य निरयविवरे हन्त निपातयति गुरुकृपाविगमे ॥५३॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

ऊरीकृतगुणवर्गा दूरीकृतदुर्विनीतसंसर्गाः ।
स्फारीकृतशिवभजना नारीकृतविभ्रमैर्न मुह्यामः ॥५४॥

परिपूर्णतत्वबोधैः पाटितदेहाभिमानमात्सर्यैः ।
तीर्णो भवार्णवोऽयं त्रिपुरद्रोहिस्मृतिप्रभावबलात् ॥५५॥

वञ्चितपञ्चशराणामञ्चितगुरुनाथचरणकमलानाम् ।
किं च निर्मत्सराणां कृपादृशा क्लृप्तसुखमिदं विश्वम् ॥५६॥

अध्यस्तमखिलदृश्यं हरकृपयात्मन्यपास्य बोधेन ।
मध्यस्थवृत्तिरेको माद्यत्यद्वैतवस्तुपरसुधया ॥५७॥

जननमरणप्रवाहे जगदेतद्वीक्ष्य मग्नमतिकृपया ।
जगदीश एव जज्ञे यदुपतिरूपेण यस्तमाकलये ॥५८॥

नाहं देहत्रयमिति नाथकृपापूर्णपात्रभूतस्य ।
नानामोहध्वंसी नारायणचिंतकस्य बोधः स्यात् ॥५९॥

प्रकृतिपुरुषान्तरज्ञः प्राकृतवृत्तान्तदूरतरचेताः ।
पश्यन्नपि चापश्यन् पर्यटति प्राज्ञपुरुषमूर्धन्यः ॥६०॥

नेतीति निगमवाण्या निखिलं निर्धूय वेद्यराशिमथ ।
अरोक्षितात्मतत्व आनन्दाब्धौ विलीयते कोपि ॥६१॥

धामत्रयदुःस्वप्नं दाक्षायण्याः कृपादृशा दृष्टः ।
पश्यति न पुनर्धीरः प्रज्ञादवदग्धयुवतिमोहवनः ॥६२॥

नाहं किञ्चिञ्जाने नानाभूतं तु वस्तुबोधाब्धौ ।
चिदिहैकाकिन्यस्ति श्रीकण्ठादिस्वरूपिणी सत्यम् ॥६३॥

करकलिततत्त्वमुद्रैः कृतकनकन्यंकुदीर्घतमनिद्रैः ।
करुणासुधासमुद्रैः कर्म ध्वस्तं तु रामभद्रैर्नः ॥६४॥

इति श्रीपरमहंसशाश्वतानन्दस्वामिविरचितो
ब्रह्मानन्दविलासः संपूर्णः ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# वेदपादस्तवः

वक्रतुण्ड महाकाय कोटिसूर्यसमप्रभ ।
निर्विघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ॥१॥

कुण्डलीकृतनागेन्द्रं खण्डेन्दुकृतशेखरम् ।
पिण्डीकृतमहाविघ्नं ढुण्ढिराजं नमाम्यहम् ॥२॥

मातामहमहाशैलं महस्तदपितामहम् ।
कारणं जगतां वन्दे कण्ठादुपरी वारणम् ॥३॥

वन्दे महेश्वरं शम्भुं विघ्नेशं षण्मुखं गुरुम् ।
गणेशान्नन्दिमुख्यांश्च शिवभक्तान्महामुनीन् ॥४॥

उमापत्यमुमाजानिमुमां चोमासहोदरम् ।
उमाननान्दरं पद्मां विधिं वयमुपास्महे ॥५॥

पञ्चाक्षरतनुं पञ्चवदनं प्रणवं शिवम् ।
अपारकरुणारूपं गुरुमूर्तिमहं भजे ॥६॥

नमो निष्कलरूपाय नमो निष्कलतेजसे ।
नमः सकलनाथाय नमस्ते सकलात्मने ॥७॥

नमः प्रणववाच्याय नमः प्रणवलिङ्गिने ।
ममः सृष्ट्यादिकर्त्रे च नमः पञ्चमुखाय ते ॥८॥

पञ्चब्रह्मस्वरूपाय पञ्चकृत्याय ते नमः
आत्मने ब्रह्मणे तुभ्यमनन्तगुणशक्तये ।
सकलाकलरूपाय शम्भवे गुरवे नमः ॥९॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

पुण्डरीकपुराधीशं पुण्डरीकाजिनाम्बरम् ।
पुण्डरीकरुचिं वन्दे पुण्डरीकाक्षसेवितम् ॥१०॥

ऋषय ऊचुः—

पुण्डरीकपुरं प्राप्य जैमिनिर्मुनिसत्तमः ।
किं चकार महायोगी सूत नो वक्तुमर्हसि ॥११॥

सूत उवाच—

भगवान् जैमिनिर्धीमान्पुण्डरीकपुरे पुरा ।
महर्षिसिद्धगन्धर्वयक्षकिन्नरसेविते ॥१२॥

नृत्यद्भिरप्सरस्सङ्घैर्दिव्यगानैश्च शोभिते ।
नृत्यन्तं परमीशानं ददर्श सदसि प्रभुम् ॥१३॥

ननाम दूरतो दृष्ट्वा दण्डवत् क्षितिमण्डले ।
पपावुत्थाय देवस्य ताण्डवामृतमागलम् ॥१४॥

पार्श्वेस्थितां महादेवीं पश्यन्तीं तस्य ताण्डवम् ।
दृष्ट्वा सुसंहृष्टमनाः पपात पुरतो मुनिः ॥१५॥

ततश्शिष्यान् समाहूय वेदशास्त्रार्थपारगान् ।
अग्निकेशमकेशं च शतयागं जटाधरम् ॥१६॥

वक्रनासं समित्पाणिं धूमगन्धिं कुशासनम् ।
एतैस्सार्धं महादेवं पूजयामास जैमिनिः ॥१७॥

ततो विवेद वेदान्तसारार्थं तत्प्रसादतः ।
कृताञ्जलिरुवाचेदं वेदान्तस्तवमुत्तमम् ॥१८॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

श्रीजैमिनिरुवाच—

ॐ विघ्नेश विधिमार्तण्डचद्रेन्द्रोपेन्द्रवन्दित ।
नमो गणपते तुभ्यं ब्रह्मणां ब्रह्मणस्पते ॥१॥

उमाकोमलहस्ताब्जसंभावितललाटिकम् ।
हिरण्यकुण्डलं वन्दे कुमारं पुष्करस्रजम् ॥२॥

शिवं विष्णोश्च दुर्दर्शं नरः कःस्तोतुमर्हति ।
तस्मान्मत्तस्स्तुतिस्सेयमभ्राद्वृष्टिरिवाजनि ॥३॥

नमश्शिवाय सांबाय नमश्शर्वाय शम्भवे ।
नमो नटाय रुद्राय सदसस्पतये नमः ॥४॥

पादभिन्नाहिलोकाय मौलिभिन्नाण्डभित्तये ।
भुजभ्रान्तदिगन्ताय भूतानां पतये नमः ॥५॥

क्वणन्नूपुरयुग्माय विलसत्कृत्तिवाससे ।
फणीन्द्रमेखलायास्तु पशूनां पतये नमः ॥६॥

कालकालाय सोमाय योगिने शूलपाणये ।
अस्थिभूषाय शुद्धाय जगतां पतये नमः ॥७॥

पात्रे सर्वस्य जगतो नेत्रे सर्वदिवौकसाम् ।
गोत्राणां पतये तुभ्यं क्षेत्राणां पतये नमः ॥८॥

शङ्कराय नमस्तुभ्यं मङ्गलाय नमोऽस्तु ते ।
धनानां पतये तुभ्यमन्नानां पतये नमः ॥९॥

अष्टांगायातिहृष्टाय क्लिष्टभक्तेष्टदायिने ।
इष्टिघ्नायास्तु तुष्टाय पुष्टानां पतये नमः ॥१०॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

पञ्चभूताधिपतये कालाधिपतये नमः।
नम आत्माधिपतये दिशां च पतये नमः ॥११॥

विश्वकर्त्रे महेशाय विश्वभर्त्रे पिनाकिने।
विश्वहन्त्रेऽग्निनेत्राय विश्वरूपाय वै नमः ॥१२॥

ईशान ते तत्पुरुष नमो घोराय ते सदा।
वामदेव नमस्तेऽस्तु सद्योजाताय वै नमः ॥१३॥

भूतिभूषाय भक्तानां भीतिभङ्गरताय ते।
नमो भवाय भर्गाय नमो रुद्राय मीढुषे ॥१४॥

सहस्राङ्गाय साम्बाय सहस्राधीश ते नमः।
सहस्रबाहवे तुभ्यं सहस्राक्षाय मीढुषे ॥१५॥

सुकपोलाय सोमाय सुललाटाय सुभ्रुवे।
सुदेहाय नमस्तुभ्यं सुमृडीकाय मीढुषे ॥१६॥

भवक्लेशनिमित्तोरुभयच्छेदकृते सताम्।
नमस्तुभ्यमषाढाय सहमानाय वेधसे ॥१७॥

वन्देऽहं देवमानन्दसंदोहं लास्यसुन्दरम्।
समस्तजगतां नाथं सदसस्पतिमद्भुतम् ॥१८॥

सुजङ्घं सूदरं सूरुं सुकण्ठं सोमभूषणम्।
सुगण्डं सुदृशं वन्दे सुगन्धिं पुष्टिवर्धनम् ॥१९॥

भिक्षाहारं हरित्क्षौमं रक्षाभूषं क्षितिक्षमम्।
यक्षेशेष्टं नमामीशमक्षरं परमं पदं ॥२०॥

अर्धालकमवक्त्रार्धमस्थ्युत्पलदलस्रजम्।
अर्धपुंलक्षणं वन्दे पुरुषं कृष्णपिङ्गलम् ॥२१॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सकृत्प्रणतसंसारमहासागरतारकम् ।
प्रणमामि तमीशानं जगतस्तस्थुषस्पतिम् ॥२२॥

धातारं जगतामीशं दातारं सर्वसंपदाम् ।
नेतारं मरुतां वन्दे जेतारमपराजितम् ॥२३॥

तं त्वामन्तकहन्तारं वन्दे मन्दाकिनीधरम् ।
ततानि विदधे योऽयमिमानि त्रीणि विष्टपा ॥२४॥

सर्वज्ञं सर्वगं सर्वं कविं वन्दे तमीश्वरम् ।
यतश्च यजुषा सार्धमृचस्सामानि जज्ञिरे ॥२५॥

भवन्तं सुदृशं वन्दे भूतभव्यभवन्ति च ।
त्यजन्नितरकर्माणि यो विश्वाभि विपश्यति ॥२६॥

हरं सुरनियन्तारं परं तमहमानतः ।
यदाज्ञया जगत्सर्वं व्याप्य नारायणः स्थितः ॥२७॥

तं नमामि महादेवं यन्नियोगादिदं जगत् ।
कल्पादो भगवान् धाता यथापूर्वमकल्पयत् ॥२८॥

ईश्वरं तमहं वन्दे यस्य लिङ्गमहर्निशम् ।
यजन्ते सह भार्याभिरिन्द्रज्येष्ठा मरुद्गणाः ॥२९॥

नमामि तमिमं रुद्रं यमभ्यर्च्य सकृत्पुरा ।
अवापुस्स्वं स्वमैश्वर्यं देवासः पूषरातयः ॥३०॥

तं वन्दे देवमीशानं यं शिवं हृदयाम्बुजे ।
सततं यतयश्शान्तास्सञ्जानाना उपासत ॥३१॥

तदस्यै सततं कुर्मो नमः कमलकान्तये ।
उमाकुचपदोरस्का या ते रुद्रः शिवा तनूः ॥३२॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

नमस्ते रुद्र भावाय नमस्ते रुद्र केलये।
नमस्ते रुद्र शान्त्यै च नमस्ते रुद्र मन्यवे ॥३३॥

वेदाश्वरथनिष्ठाभ्यां पादाभ्यां त्रिपुरान्तक।
बाणकार्मुकयुक्ताभ्यां बाहुभ्यामुत ते नमः ॥३४॥

ईशानं सकलाराध्यं वन्दे सम्पत्समृद्धिदम्।
यस्य चासीद्धरिश्शस्त्रं ब्रह्मा भवति सारथिः ॥३५॥

नमस्ते वासुकिज्याय विष्फाराय च शङ्कर।
महते मेरुरूपाय नमस्ते अस्तु धन्वने ॥३६॥

नमः परशवे देवशूलायानलरोचिषे।
हर्यग्नीन्द्वात्मने तुभ्यमुतोत इषवे नमः ॥३७॥

सुरेतरवधूहारहारीणि हर यानि ते।
अन्यान्यस्त्राण्यहं तूर्णमिदं तेभ्योऽकरं नमः ॥३८॥

धराधरसुतालीलासरोजाहतबाहवे।
तस्मै तुभ्यमवोचाम नमो अस्मा अवस्यवः ॥३९॥

रक्ष मामक्षमं क्षीणमक्षक्षतमशिक्षितम्।
अनाथं दीनमापन्नं दरिद्रं नीललोहित ॥४०॥

दुर्मुखं दुष्क्रियं दुष्टं रक्ष मामीश दुर्दशम्।
मादृशानामहं नात्वदन्यं विन्दामि राधसे ॥४१॥

भवाख्येनाग्निना शम्भो रागद्वेषमदार्चिषा।
दयालो दह्यमानानामस्माकमविता भव ॥४२॥

परदारं परावासं परवस्त्रं पराप्रियम्।
हर पाहि परान्नं मां पुरुणामन् पुरुष्टुत ॥४३॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

लौकिकैर्यत्कृतं पुष्टैर्नावमानं सहामहे ।
देवेश तव दासेभ्यो भूरिदा भूरि देहि नः ॥४४॥

लोकानामुपपन्नानां गर्विणामीश पश्यताम् ।
अस्मभ्यं क्षेत्रमायुश्च वसुस्पार्हं तदाभर ॥४५॥

याच्ञादौ महतीं लज्जामस्मदीयां घृणानिधे ।
त्वमेव वेत्सि नस्तूर्णमिषं स्तोतृभ्य आभर ॥४६॥

जाया माता पिता चान्ये मां द्विषंत्यमतिं कृशम् ।
देहि मे महतीं विद्यां राया विश्वपुषा सह ॥४७॥

अदृष्टार्थेषु सर्वेषु दृष्टार्थेष्वपि कर्मसु ।
मेरुधन्वन्नशक्तेभ्यो बलं धेहि तनूषु नः ॥४८॥

लब्धानिष्टसहस्रस्य नित्यमिष्टवियोगिनः ।
हृद्रोगं मम देवेश हरिमाणं च नाशय ॥४९॥

ये ये रोगाः पिशाचा वा नरा देवाश्च मामिह ।
बाधन्ते देव तान् सर्वान् निबाधस्व महानसि ॥५०॥

त्वमेव रक्षिताऽस्माकं नान्यः कश्चन विद्यते ।
तस्मात्स्वीकृत्य देवेश रक्षाणो ब्रह्मणस्पते ॥५१॥

त्वमेवोमापते माता त्वं पिता त्वं पितामहः ।
त्वमायुस्त्वं मतिस्त्वं श्रीरुत भ्रातोत नस्सखा ॥५२॥

यतस्त्वमेव देवेश कर्ता सर्वस्य कर्मणः ।
ततः क्षमस्व तत्सर्वं यन्मया दुष्कृतं कृतम् ॥५३॥

त्वत्समो न प्रभुत्वेन फल्गुत्वेन च मत्समः ।
अतो देव महादेव त्वमस्माकं तव स्मसि ॥५४॥



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सुस्मितं भस्मगौराङ्गं तरुणादित्यविग्रहम् ।
प्रसन्नवदनं सौम्यं गायेत्त्वा नमसा गिरा ॥५५॥

एष एव वरोऽस्माकं नृत्यन्तं त्वां सभापते ।
लोकयन्तमुमाकान्तं पश्येम शरदश्शतम् ॥५६॥

अरोगिणो महाभागा विद्वांसश्च वहुश्रुताः ।
भगवंस्त्वत्प्रसादेन जीवेम शरदश्शतम् ॥५७॥

सदारा वन्धुभिस्सार्धं त्वदीयं ताण्डवामृतम् ।
पिवन्तः काममीशान नन्दाम शरदश्शतम् ॥५८॥

देवदेव महादेव त्वदीयांघ्रिसरोरुहे ।
कामं मधुमयं पीत्वा मोदाम शरदश्शतम् ॥५९॥

कीटा नागाः पिशाचा वा ये वा के वा भवे भवे ।
तव दासा महादेव भवाम शरदश्शतम् ॥६०॥

सभायामीश ते दिव्यं नृत्तवाद्यकलस्वनम् ।
श्रवणाभ्यां महादेव शृणवाम शरदश्शतम् ॥६१॥

स्मृतिमात्रेण संसारविनाशनपराणि ते ।
नामानि तव दिव्यानि प्रब्रवाम शरदश्शतम् ॥६२॥

इषुसन्धानमात्रेण दग्धत्रिपुर धूर्जटे ।
आधिभिर्व्याधिभिर्नित्यमजीतास्स्याम शरदश्शतम् ॥६३॥

चारुचामीकराभासं गौरीकुचपदोरसम् ।
कदा नु लोकयिष्यामि युवानं विश्पतिं कविम् ॥६४॥

प्रमथेन्द्रावृतं प्रीतवदनं प्रियभाषिणम् ।
सेविष्येऽहं कदा साम्वं सुभासं शुक्रशोचिषम् ॥६५॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

बह्वेनसं मामकृतपुण्यलेशं च दुर्मतिम् ।
स्वीकरिष्यति किं न्वीशो नीलग्रीवो विलोहितः ॥६६॥

कालशूलानलासक्तभीतिव्याकुलमानसम् ।
कदा नु द्रक्ष्यतीशो मां तुविग्रीवो अनानतः ॥६७॥

गायका यूयमायात यदि रायादिलिप्सवः ।
धनदस्य सखेशोऽयमुपास्मै गायता नरः ॥६८॥

आगच्छत सखायो मे यदि यूयं मुमुक्षवः ।
स्तुतेशमेनं मुक्त्यर्थमेष विप्रैरभिष्टुतः ॥६९॥

पदे पदे पदे देवपदं नः सेत्स्यति ध्रुवम् ।
प्रदक्षिणं प्रकुरुतमध्यक्षं धर्मणामिमम् ॥७०॥

सर्वं कार्यं युवाभ्यां हि सुकृतं सुहृदौ मम ।
अञ्जलिं कुरुतं हस्तौ रुद्राय स्थिरधन्वने ॥७१॥

मन्मूर्धन् मरुतामूर्ध्वं भवं चन्द्रार्धमूर्धजम् ।
मूर्धन्नं च चतुर्मूर्ध्नो नमस्या कल्मलीकिनम् ॥७२॥

नयने नयनोद्भूतदहनालीढमन्मथम् ।
पश्यतं तरुणं सौम्यं भ्राजमानं हिरण्मयम् ॥७३॥

सभायां शूलिनस्सन्ध्यानृत्तवाद्यस्वनामृतम् ।
कर्णौ तूर्णं यथाकामं पातं गौराविवेरिणे ॥७४॥

नासिके वासुकिश्वासवासिताभासितोरसम् ।
घ्रायतं गरलग्रीवमस्मभ्यं शर्म यच्छतम् ॥७५॥

स्वस्त्यस्तु सुहिते जिह्वे विद्यादातुरुमापतेः ।
स्तवमुच्चतरं ब्रूहि जयतामिव दुन्दुभिः ॥७६॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

चेतःपोत न शोचस्त्वं निन्द्यं विन्दाखिलं जगत् ।
अस्य नृतामृतं शम्भोर्गौरो न तृषतिः पिब ॥७७॥

सुगन्धि सुखसंस्पर्शं कामदं सोमभूषणम् ।
गाढमालिङ्गमच्चित्तयोषा जारमिव प्रियम् ॥७८॥

महामयूखाय महाभुजाय महाशरीराय महाम्बराय ।
महाकिरीटाय महेश्वराय महोमयीं सुष्टुतिमीरयामि ॥७९॥

यथाकथंचिद्रचिताभिरीश प्रसादतश्चारुभिरादरेण ।
प्रपूजयामि स्तुतिभिर्महेशमषाढमुग्रं सहमानमाभिः ॥८०॥

नमश्शिवाय त्रिपुरान्तकाय जगत्यत्रयेशाय दिगम्बराय ।
नमोऽस्तु मुख्याय हराय शम्भो नमो जघन्याय च बुध्नियाय ॥८१॥

नमो विकाराय विकारिणे ते नमो भवायास्तु भवोद्भवाय ।
बहुप्रजाऽत्यन्तविचित्ररूपा यतः प्रसूता जगतः प्रसूती ॥८२॥

तस्मै सुरेशोरुकिरीटनानानारत्नावृताष्टापदविष्टराय ।
भस्माङ्गरागाय नमः परस्मै यस्मात् परन्नापरमस्ति किंचित् ॥८३॥

सर्पाधिराजौषधिनाथयुद्धक्षुभ्यज्जटामण्डलगह्वराय ।
तुभ्यं नमस्सुन्दरताण्डवाय यस्मिन्निदं सञ्चविचैति सर्वम् ॥८४॥

नमामि नित्यं त्रिपुरारिमेनं यमान्तकं षण्मुखतातमीशम् ।
ललाटनेत्रार्दितपुष्पचापं विश्व पुराणं तमसः परस्तात् ॥८५॥

मुरारिनेत्रार्चितपादपद्ममुमांघ्रिलाक्षापरिरक्तपाणिम् ।
नमामि देवं विषनीलकण्ठं हिरण्यदन्तं शुचिवर्णमारात् ॥८६॥

अनन्तमव्यक्तमचिन्त्यमेकं हरन्तमाशाम्बरमम्बराङ्गम् ।
अजं पुराणं प्रणमामि योऽयमणोरणीयान्महतो महीयान् ॥८७॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अन्तस्थमात्मानमजं न दृष्ट्वा भ्रमन्ति मूढा गिरिगह्वरेषु ।
पश्चादुदग्दक्षिणतः पुरस्तादधस्विदासीदुपरिस्विदासीत् ॥८८॥

इमं नमामीश्वरमिन्दुमौलिं शिवं महानन्दमशोकदुःखम् ।
हृदम्बुजे तिष्ठति यः परात्मा परीत्य सर्वाः प्रदिशो दिशश्च ॥८९॥

रागादिकापथ्यसमुद्भवेन भग्नं भवाख्येन महामयेन ।
विलोक्य मां पालय चन्द्रमौले भिषक्तमं त्वा भिषजां शृणोमि ॥९०॥

दुःखाम्बुराशिं सुखलेशहीनमस्पृष्टपुण्यं बहुपातकं माम् ।
मृत्योः करस्थं भव रक्ष भीतं पश्चात्पुरस्तादधरादुदक्तात् ॥९१॥

गिरीन्द्रजाचारुमुखावलोकसुशीतया देव तवैव दृष्ट्या ।
वयं दयापूरितयैव तूर्णमपो न नावा दुरिता तरेम ॥९२॥

अपारसंसारसमुद्रमध्ये निमग्नमुत्क्रोशमनल्परागम् ।
मामक्षमं पाहि महेश जुष्टमोजिष्ठया दक्षियेव रातिम् ॥९३॥

स्मरन् पुरा सञ्चितपातकानि खरं यमस्यापि मुखं यमारे ।
बिभेमि मे देहि यथेष्टमायुर्यदि क्षितायुर्यदि वा परेतः ॥९४॥

सुगन्धिभिस्सुन्दरभस्मगौरैरनन्तभोगैर्मृदुलैरघोरैः ।
इमं कदालिङ्गति मां पिनाकी स्थिरेभिरङ्गैः पुरुरूप उग्रः ॥९५॥

क्रोशन्तमीशः पतितं भवाब्धौ नागास्यमण्डूकमिवातिभीतम् ।
कदा नु मां द्रक्ष्यति देवदेवो हिरण्यरूपस्स हिरण्यसंदृक् ॥९६॥

चारुस्मितं चन्द्रकलावतंसं गौरीकटाक्षाहंमयुग्मनेत्रम् ।
आलोकयिष्यामि कदा नु देवमादित्यवर्णं तमसः परस्तात् ॥९७॥

आगच्छतात्राशु मुमुक्षवो ये यूयं शिवं चिन्तयतान्तराब्जे ।
ध्यायन्ति [illegible] हि नित्यं [illegible] ॥९८॥

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

आयात यूयं भुवनाधिपत्यकामा महेशं सकृदर्चयध्वम् ।
एनं पुराभ्यर्च्य हिरण्यगर्भो भूतस्य जातः पतिरेक आसीत् ॥९९॥

ये कामयन्ते विपुलां श्रियं ते श्रीकण्ठमेनं सकृदानमन्ताम् ।
श्रीमानयं श्रीपतिवन्द्यपादश्श्रीणामुदारो धरुणो रयीणाम् ॥१००॥

सुपुत्रकामा अपि ये मनुष्या युवानमेनं गिरिशं यजन्ताम् ।
यतस्स्वयंभूर्जगतां विधाता हिरण्यगर्भस्समवर्ततताग्रे ॥१०१॥

अलं किमुक्तैर्बहुभिस्समीहितं समस्तमस्याश्रयणेन सिध्यति ।
पुरैनमाश्रित्य हि कुम्भसम्भवो दिवा न नक्तं पलितो युवाजनि ॥१०२॥

अन्यत्परित्यज्य ममाक्षभृङ्गास्सर्वे सदेवं शिवमाश्रयध्वम् ।
आमोदवानेष मृदुश्शिवोऽयं स्वादुष्किलायं मधुमां उतायम् ॥१०३॥

भविष्यसि त्वं प्रतिमानहीना विनिर्जिताऽशेषनरामरा च ।
नमोऽस्तु ते वाणि महेशमेनं स्तुहि श्रुतं गर्तसदं युवानम् ॥१०४॥

यद्यन्मनश्चिन्तयसि त्वमिष्टं तत्तद्भविष्यत्यखिलं ध्रुवं ते ।
दुःखे निवृत्तिविषये कदाचिद्वक्ष्वामहे सौमनसाय रुद्रम् ॥१०५॥

अज्ञानयोगादपचारकर्म यत्पूर्वमस्माभिरनुष्ठितं ते ।
तद्देव सोढ्वा सकलं दयालो पितेव पुत्रान् प्रति नो जुषस्व ॥१०६॥

संसाराख्यक्रुद्धसर्पेण तीव्रैः रागद्वेषोन्मादलोभादिदन्तैः ।
दृष्टं दृष्ट्वा मां दयालुः पिनाकी देवस्त्राता त्रायतामप्रयुच्छन् ॥१०७॥

इत्युक्त्वान्ते यत्समाधेर्नमन्तो रुद्राद्यास्त्वां यान्ति जन्माहिदष्टाः ।
सन्वो नीलग्रीवसूत्रात्मनाहं तत्त्वा यामि ब्रह्मणा वन्दमानः ॥१०८॥

भवातिभीषणज्वरेण पीडितान्महाभया-
नशेषपातकालयानदूरकाललोचनान् ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अनाथनाथ ते करेण भेषजेन कालह-
न्नुदूषुणो वसो महे मृशस्व शूर राधसे ॥१०९॥

जयेम येन सर्वमेतदिष्टमष्टदिग्गजं
भुवःस्थलं नभःस्थलं दिवःस्थलं च तद्गतम् ।
य एष सर्वदेवदानवानतस्सभापति-
स्सनो ददातु तं रयिं रयिं पिशङ्गसन्दृशम् ॥११०॥

नमो भवाय ते हराय भूतिभासितोरसे
नमो मृडाय ते हराय भूतभीतिभङ्गिने ।
नमश्शिवाय विश्वपाय शाश्वताय शूलिने
न यस्य हन्यते सखा न जीयते कदाचन ॥१११॥

सुरपतिपतये नमो नमः क्षितिपतिपतये नमो नमः ।
प्रजापतिपतये नमो नमोऽम्बिकापतय उमापतये पशुपतये
नमो नमः ॥११२॥

विनायकं वन्दकमस्तकाहतिस्वनातिसङ्घुष्टसमस्तविष्टपम् ।
नमामि नित्यं प्रणतार्तिनाशनं कविं कवीनामुपमश्रवस्तमम् ॥११३॥

देवा युद्धे यागे विप्राः स्वीयां सिद्धिं ह्वायं ह्वायम् ।
यं सिद्धयन्ति स्कन्दं वन्दे सुब्रह्मण्योँ सुब्रह्मण्योम् ॥११४॥

नमश्शिवायै जगदम्बिकायै शिवप्रियायै शिवविग्रहायै ।
समुद्बभूवाद्रिपतेस्सुता या चतुष्कपर्दा युवतिस्सुपेशाः ॥११५॥

हिरण्यवर्णां मणिनूपुराङ्घ्रिं प्रसन्नवक्त्रां शुकपद्महस्ताम् ।
विशालनेत्रां प्रणमामि गौरीं वचोविदं वाचमुदीरयन्तीम् ॥११६॥

नमामि मेनातनयाममेयामुमामिमां मानवतीं च मान्याम् ।
करोति या भूतिसितौ स्तनौ द्वौ प्रियं सखायं परिषस्वजाना ॥११७॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

कान्तामिमां कान्तनितान्तकान्तिभ्रान्तामुपान्तानतहर्यजेन्द्राम् ।
नतोऽस्मि यास्ते गिरिशस्य पार्श्वे विश्वानि देवी भुवनाभिचक्ष्य ।११८।

वन्दे गौरीं तुङ्गपीनस्तनीं तां चन्द्राचूडां श्लिष्टसर्वाङ्गरागाम् ।
एषा देवी प्राणिनामन्तरात्मा देवं देवं राधसे चोदयन्ती ॥११९॥

एनां वन्दे दीनरक्षाविनोदां मेनकन्यामानतानन्ददात्रीम् ।
या विद्यानां मङ्गलानां च वाचामेषा नेत्री राधसस्सूनृतानाम् ॥१२०॥

भवातिभीतोरुभयापहन्त्रि भवानि भोग्याभरणैकभोगैः ।
धियं परां देहि शिवप्रिये नो ययाति विश्वा दुरिता तरेम ॥१२१॥

शिवे कथं त्वं स्तुतिभिस्तु गोयसे जगत्त्रयी केलिरयं शिवः पतिः ।
हरिस्तु दासोऽनुचरेन्दिरा शची सरस्वती वा सुभगा ददिर्वसु ॥१२२॥

इमं स्तवं जैमिनिना प्रचोदितं द्विजोत्तमो यः पठतीशभक्तितः ।
तमिष्टवाक्सिद्धिमतिद्युतिश्रियः परिष्वजन्ते जनयो यथा पतिम् ॥१२३॥

महीपतिर्यस्तु युयुत्सुरादरादिमं पठत्यस्य तथैव सादराम् ।
प्रयान्ति वा शीघ्रमथान्तकान्तिकं भियं दधाना हृदयेषु शत्रवः ॥१२४॥

त्रैवर्णिकेष्वन्यतमो य एनं नित्यं कदाचित्पठतीशभक्तितः ।
कलेवरान्ते शिवपार्श्ववर्ती निरञ्जनस्साम्यमुपैति दिव्यम् ॥१२५॥

लभन्ते पठन्तो मतिं बुद्धिकामाः
　　लभन्ते चिरायुस्तथायुष्यकामाः ।
लभन्ते पठन्तः श्रियं पुष्टिकामाः
　　लभन्ते ह पुत्रान् लभन्ते ह पुत्रान् ॥१२६॥

इत्यनेन स्तवेनेशं स्तुत्वासौ जैमिनिर्मुनिः ।
स्नेहाश्रुपूर्णनयनः प्रणनाम सभापतिम् ॥१॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

मुहुर्मुहुः पिबन्नीशताण्डवामृतमागलम् ।
सर्वान्कामानवाप्यान्ते गाणापत्यमवाप ह ॥२॥

पादं वाप्यर्धपादं वा श्लोकं श्लोकार्धमेव वा ।
यस्तु वाचयते नित्यं शिवलोकं स गच्छति ॥३॥

वेदः शिवः शिवो वेदो वेदाध्यायी सदाशिवः ।
तस्मात्सर्वप्रयत्नेन वेदाध्यायिनमर्चयेत् ॥४॥

अधीतविस्मृता वेदा वेदपादस्तवं पठन् ।
स चतुर्वेदसाहस्रपारायणफलं लभेत् ॥५॥

चिदम्बरमिति ब्रूयात् सकृज्जननवर्जितः ।
मुक्तिघण्टामणिपथं मोक्षमेव समश्नुते ॥६॥

कृपासमुद्रं सुमुखं त्रिनेत्रं जटाधरं पार्वतिवामभागम् ।
सदाशिवं रुद्रमनन्तरूपं चिदम्बरेशं हृदि भावयामि ॥७॥

आनन्दनृत्तसमये नटनायकस्य
पादारविन्दमणिनूपुरशिञ्जितानि ।
आनन्दयन्ति मुदयन्ति विमोहयन्ति
रोमाञ्चयन्ति नयनानि कृतार्थयन्ति ॥८॥

सुमीनाक्षीसुन्दरेशौ भक्तकल्पमहीरुहौ ।
तयोरनुग्रहो यत्र तत्र शोको न विद्यते ॥९॥

अतिभीषण कटुभाषण यमकिङ्करपटली-
कृतताडन परिपीडन मरणागमसमये ।
उमया सह मम चेतसि यमशासन निवसन्
हर शङ्कर शिव शङ्कर हर मे हर दुरितम् ॥१०॥

॥ इति श्री जैमिनिमहर्षिणा प्रणीतो वेदपादस्तवः संपूर्णः ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

# अनुभवपञ्चविंशतिः

अहो निरञ्जनः शान्दो बोधोऽहं प्रकृतेः परः ।
एतावन्तमहं कालमहं मोहविडम्वितः ॥१॥

यथा प्रकाशयत्येको देही देहं जगत्तथा ।
अतो मम जगत्सर्वमभवन्न च किंचन ॥२॥

सशरीरमहो विश्वं परित्यज्य मयाधुना ।
कुतश्चित्कौशलादेव परमात्मावलोक्यते ॥३॥

यथा न तोयतो भिन्नास्तरङ्गाः फेनवुद्वुदाः ।
आत्मनो न तथा भिन्नं विश्वात्वनि विनिर्गतम् ॥४॥

तन्तुमात्रो भवेदेव पटो यद्वद्विचारितः ।
आत्मतन्मात्रमेवेदं तद्वद्विश्वं विचारितम् ॥५॥

यथैवेक्षुरसोत्क्षिप्ता तेन व्याप्ता न शर्करा ।
तथा विश्वं मयि क्षिप्तं मया व्याप्तं निरन्तरम् ॥६॥

आत्माज्ञानाज्जगद्भ्रान्तिरात्मज्ञानान्न भासते ।
रज्ज्वज्ञानादहिभ्रान्तिस्तज्ज्ञानाद्भासते न हि ॥७॥

प्रकाशो मे निजं रूपं नातिरिक्तोऽस्म्यहं ततः ।
यदा प्रकाशते विश्वं तदाहं भास एव हि ॥८॥

अहो विकल्पितं विश्वमज्ञानान्मयि भासते ।
रूप्यं शुक्तौ फणी हारे वारि सूर्यकरे तथा ॥९॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

मत्तो विनिर्गतं विश्वं मय्येव लयमेति हि।
मृदि कुम्भो जले वीचिः कनके कटको यथा ॥१०॥

अहो अहं नमो मह्यं विनाशो यस्य नास्ति मे।
ब्रह्मादिस्तम्बपर्यन्तजगन्नाशेऽपि तिष्ठतः ॥११॥

अहो अहं नमो मह्यमेकोऽहं देहवानपि।
क्वचिन्न गन्ता नागन्ता व्याप्य विश्वमवस्थितः ॥१२॥

अहो अहं नमो मह्यं दक्षोऽहं नास्ति मत्समः।
असंस्पृष्टशरीरेण येन विश्वं चिरं धृतम् ॥१३॥

अहो अहं नमो मह्यं यस्य मे नास्ति किंचन।
अथ वा यस्य मे सर्वं यद्वाङ्मनस्य गोचरः ॥१४॥

ज्ञानं ज्ञेयं तथा ज्ञाता त्रितयं नास्ति वास्तवम्।
अज्ञानाद्भाति यत्रेदं सोऽहमस्मि निरञ्जनः ॥१५॥

द्वैतमूलमहो दुःखं नान्यत्तस्यास्ति भेषजम्।
दृश्यमेतन्मृषा सर्वमेकोऽहं चिद्रसोऽमलः ॥१६॥

बोधमात्रोऽहमज्ञानादुपाधिः कल्पितो मयि।
एवं विमृशतो नित्यं निर्विकल्पस्थितं मम ॥१७॥

सशरीरमहो विश्वं न किञ्चिदिति निश्चितम्।
शुद्धचिन्मात्रमात्माहं तत्का स्यात्कल्पनाधुना ॥१८॥

शरीरं स्वर्गनरकौ बन्धमोक्षौ सुखं तथा।
कल्पनामात्रमेवैतत्किं कार्यं मे चिदात्मनः ॥१९॥

अहो जनसमूहेऽपि न द्वयं पश्यतो मम।
अरण्यमिव संवृत्तं क्व रतिं करवाण्यहम् ॥२०॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

नाहं देहो न मे देहो जीवो नाहमहं हि चित् ।
कल्पनामात्रमेवैतत्किं कार्यं मे चिदात्मनः ॥२१॥

मय्यानन्दाम्बुधौ चित्तवातस्तस्मात्समुत्थितैः ।
अहो भुवनकल्लोलैर्विचित्रैर्भानमुत्थितम् ॥२२॥

मय्यानन्दमहाम्भोधौ चित्तवाते प्रशाम्यति ।
अभाग्यजीववणिजो जगत्स्रोतोऽपि नश्वरम् ॥२३॥

मय्यानन्दमहाम्भोधावाश्चर्यं जीववीचयः ।
उद्यन्ति घ्नन्ति खेलन्ति प्रविशन्ति स्वभावतः ॥२४॥

अहो मयि स्थितं विश्वं वस्तुतो न मयि स्थितम् ।
न मे बन्धोऽस्ति मोक्षो वा भ्रान्तिः शान्ता निराश्रया ॥२५॥

॥ इत्यनुभवपञ्चविंशतिः ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# जीवन्मुक्तलक्षणम्

जोवः शिवसमामुक्तो ज्ञानाज्ञानसमासमः।
एकानेकसमश्चैव जीवन्मुक्तः स उच्यते ॥१॥

एकं ब्रह्म जगत्सर्वमखण्डं भासते सदा।
अनादि भान्ति भूतानि जीवन्मुक्तः स उच्यते ॥२॥

एकधा बहुधा चैव दृश्यते जलचन्द्रवत्।
आत्मवत्सर्वमेकं तु जीवन्मुक्तः स उच्यते ॥३॥

सर्वभूतसमं ब्रह्म भेदोऽभेदो न विद्यते।
एकमेवाधिपश्यन्ति जीवन्मुक्तः स उच्यते ॥४॥

कर्माकर्म न पश्यन्ति सर्वकर्मविमोचकम्।
निष्कर्म कर्म कर्तारं जीवन्मुक्तः स उच्यते ॥५॥

लोभमोहपरित्यक्त आशापाशविवर्जितः।
सुखं दुःखं न जानाति जीवन्मुक्तः स उच्यते ॥६॥

कर्ममुक्तः क्रियामुक्तो नित्यमुक्तश्चिदात्मकः।
कायमायापरित्यक्तो जीवन्मुक्तः स उच्यते ॥७॥

दिवारात्री न जानाति दारपुत्रादिकं समम्।
दयातोषी मृदु भाष्यं जीवन्मुक्तः स उच्यते ॥८॥

कामनाकार्यनिर्दोषः कार्याकार्यव्यवस्थितः।
स्वहितात्मनि संतुष्टो जीवन्मुक्तः स उच्यते ॥९॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

गुणदोषापरिच्छिन्नो गुणागुणपरीक्षकः ।
गुणत्रयविहीनश्च जीवन्मुक्तः स उच्यते ॥१०॥

संतुष्टसकलावस्थो सदानन्दसुखात्मकः ।
सर्वलोकप्रियं भाष्यं जीवन्मुक्तः स उच्यते ॥११॥

पूर्णानन्दोऽहमस्मीति पूर्णानन्दोऽस्मि सर्वदा ।
पूर्णात्पूर्णतरं येन जीवन्मुक्तः स उच्यते ॥१२॥

जाग्रत्स्वप्नमिव साक्षी साक्षी देहचतुष्टयम् ।
सर्वसाक्षी निरालम्बो जीवन्मुक्तः स उच्यते ॥१३॥

एकात्मभावनादेव यदि भावं न हि न हि ।
लोकान्तश्चैवमेकान्तो जीवन्मुक्तः स उच्यते ॥१४॥

शान्तिवृद्धौ क्षमा पूर्णशान्तिर्दान्तिर्मुहुर्मुहुः ।
भक्तिभावं परित्यज्य जीवन्मुक्तः स उच्यते ॥१५॥

आनन्दमखिलं सर्वमानन्देति चिदात्मकम् ।
आनन्दं परमानन्दो जीवन्मुक्तः स उच्यते ॥१६॥

तत्पदस्य तदात्मानं त्वंपदस्य चिदात्मकम् ।
असिपदे सदा मग्नं जीवन्मुक्तः स उच्यते ॥१७॥

निर्धूतं च निरापेक्षं जितसङ्गं जितेन्द्रियम् ।
प्रतापः पुरुषं येन जीवन्मुक्तः स उच्यते ॥१८॥

प्रज्ञानं हृदयावर्तं विज्ञानं कृतमानसा ।
अज्ञानं शृङ्खलाच्छेद्यं जीवन्मुक्तः स उच्यते ॥१९॥

दृश्यादृश्यसमं चैव दृष्टादृष्टसमं तथा ।
दर्शने बुद्धिः स्थातव्यं जीवन्मुक्तः स उच्यते ॥२०॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अयमात्मा चिदध्यक्षं अहमस्तीतिभावना ।
सर्वभावविहीनश्च जीवन्मुक्तः स उच्यते ॥२१॥

अहंभावं न गृह्णीयादहंकर्ता कदाचन ।
अहंकारातीतमानं जीवन्मुक्तः स उच्यते ॥२२॥

जीवन्मुक्त इति व्याख्या व्याख्यानं च परं परम् ।
दत्तेन कथितं व्याख्या जीवन्मुक्तः स उच्यते ॥२३॥

॥ इति श्रीदत्तात्रेयमुनिविरचितं जीवन्मुक्तलक्षणं संपूर्णम् ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# भिक्ष्वष्टकम्

गङ्गाप्रतीरं ध्रुवमाश्रयन्तः सङ्गापनोदं परिशीलयन्तः ।
तुरंगशृङ्गान्समुपाश्रयन्तः कौपीनवन्तः खलु भाग्यवन्तः ॥१॥

कामाद्यरातीन्परिभावयन्तो भामादिभोगानपि दूरयन्तः ।
वामान्द्रुमूलान्समुपाश्रयन्तः कौपीनवन्तः खलु भाग्यवन्तः ॥२॥

ब्रह्मात्मभावैकसुधां पिबन्तो मालेश्वरं श्रीमनुमामनन्तः ।
मायां महाजालमयीं त्यजन्तः कौपीनवन्तः खलु भाग्यवन्तः ॥३॥

तीर्थानि सर्वाणि च तीर्थयन्तो मुक्तिं परां केवलमर्थयन्तः ।
स्वीयानि नामानि यथार्थयन्तः कौपीनवन्तः खलु भाग्यवन्तः ॥४॥

भिक्षां क्षुधामात्रहरामटन्तो रक्षां जनानां निगमैरटन्तः ।
साक्षात्परोक्षेऽपि परे रमन्तः कौपीनवन्तः खलु भाग्यवन्तः ॥५॥

गुर्वर्पिताज्ञामनुपालयन्तः सर्वं चिदेवेति विलोकयन्तः ।
सर्वंसहां च क्षमया जयन्तः कौपीनवन्तः खलु भाग्यवन्तः ॥६॥

आशास्वनन्तासु भृशं भ्रमन्त आशां समूलामवमानयन्तः ।
ईशाङ्घ्रिपद्मे सततं रमन्तः कौपीनवन्तः खलु भाग्यवन्तः ॥७॥

चिन्तां दुरन्तां परिहर्तुमन्तश्चिन्तां भवस्यात्मपरां भजन्तः ।
स्वान्ते नितान्तं स्वगुरून्स्मरन्तः कौपीनवन्तः खलु भाग्यवन्तः ॥८॥

श्रीदक्षिणामूर्तिकटाक्षवीक्षालक्षीकृतेनागमदक्षिणेन ।
श्रीसच्चिदानन्दमुनीश्वरेण भिक्ष्वष्टकं दीपितमार्यभक्त्या ॥९॥

प्रत्यूषकाले पठतां जनानां प्रत्याहृतिः कास्ति नु तद्व्रतानाम् ।
शर्वादिलोकानपि तुच्छयन्तो निर्वाणसाम्यं ननु ते लभन्ते ॥१०॥

॥ इति श्रीसच्चिदानन्दमुनिविरचितं भिक्ष्वष्टकम् ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# प्रणवार्थप्रकाशिका

समास्थितः सप्तमयोगभूमिका-
मपारगम्भीरसुखामृताम्बुधिः ।
सतां गुरुः सद्गुणसागरो मुहु-
र्मया शिवानन्दयतीश्वरो नतः ॥१॥

अकारोकारवर्णाभ्यां सातत्योत्कर्षधर्मिणम् ।
प्रत्यञ्चं संस्मरेन्मार्थं ब्रह्म चैक्यं तथोमिति ॥
अजाद्यात्मकमात्मानमकारार्थं परेश्वरम् ।
उवर्णपूर्वभागार्थमुत्कृष्टाद्यात्मकं मुहुः ॥३॥

उवर्णोत्तरभागार्थं तं विदुर्व्यवहारतः ।
मार्थमुक्तमहानन्दाद्यात्मप्रत्यक्तथोमिति ॥४॥

इत्यजोत्कृष्टमुक्तादिशब्दैकांशाक्षरात्मना ।
एकेन प्रणवेनैक्यं जानीयाद्व्यतिहारतः ॥५॥

अथवाकारमात्मानमुकारं च जगद्गुरुम् ।
अवधारणसंयुक्तमेकीकुर्यादथोमिति ॥६॥

अहंशब्दैकदेशत्वाद्ब्रह्मशब्दैकदेशतः ।
अनयोरेकदेशत्वाद्ब्रह्माकारेण च स्मरेत् ॥७॥

साक्षित्वान्मनआदीनां मकारेण तु साक्षिणम् ।
सावधारणमैक्यार्थमेवमोमिति पश्यति ॥८॥

उक्ते स्वात्मन्यवस्थानात्कथं चित्प्रच्युतो यदि ।
आत्मानं त्रिशरीरं त्रिशरीरं ब्रह्म चिन्तयेत् ॥९॥



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

स्थूलत्वात्स्थूलभुक्त्वाच्च सूक्ष्मत्वात्सूक्ष्मभुक्त्वतः ।
ऐक्यादानन्दभोगाच्च तुर्यैकत्वं च चित्त्वतः ॥१०॥

विश्वतैजसकप्राज्ञतुर्यैश्च चतुरात्मकैः ।
वैश्वानराद्यभिन्नं तं चतुष्पादं विचिन्तयेत् ॥११॥

परादिरूपाकारेण विश्वो वैश्वानरात्मकः ।
चतुरात्मा स्थूलसूक्ष्मबीजसाक्षिभिरुच्यते ॥१२॥

हिरण्यगर्भाभिन्नश्च तैजसश्चतुरात्मकः ।
उच्यते पूर्ववत्तत्रोंकारेण चतुरात्मना ॥१३॥

प्राज्ञस्तथेश्वराभिन्नचतुरात्मा निगद्यते ।
चतूरूपमकारेण जगद्बीजोपधानकः ॥१४॥

ओतानुज्ञानुज्ञाना (?) विकल्पप्रवणवेन तु ।
तादृशेनोच्यते साक्षी स्वप्रकाशचिदात्मकः ॥१५॥

वाचैरथात्मपादैस्तु मात्राणां चोंकृतेर्यतिः ।
एकत्वं चिन्तयेत्प्राज्ञो युगपल्लयसिद्धये ॥१६॥

स्थूलं सूक्ष्मे च तद्बीजे मात्राभिः प्रविलापयेत् ।
कारणं चोंकृतेरोताद्यात्मना चिन्तयन्प्रसेत् ॥१७॥

य इत्थं प्रणवस्यार्थं गुरोर्ज्ञात्वा यतिर्भवेत् ।
स्वात्मनिष्ठः स मुक्तः स्यादत्रैवानन्दवारिधिः ॥१८॥

॥ इति प्रणवार्थप्रकाशिका ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# सप्तश्लोकीप्रकरणम्

आत्माश्रयात्मविषयं भावरूपमनादि च ।
अज्ञानं बाध्यमानत्वान्न सदित्युच्यते बुधैः ॥१॥

नासत्प्रतीयमानत्वाज्जगन्निर्वाहकत्वतः ।
परस्परविरोधेन न भवेत्सदसच्च तत् ॥२॥

सदादिभ्यो विभिन्नं तद्धर्म्यादेरनिरूपणात् ।
उक्तदोषत्रयापत्तेरभिन्नं च न तद्भवेत् ॥३॥

परस्परविरोधेन भिन्नाभिन्नं न तद्भवेत् ।
न सावयवहीनं तत्कार्येष्ववयवान्वयात् ॥४॥

न च सावयवं तत्स्यान्मूलकारणताबलात् ।
मिथो विरोधादुभयात्मकत्वं नैव संभवेत् ॥५॥

तस्मिन्नेव चिदाभासे सुस्थितं कृत्यपञ्चकम् ।
सत्कृत्य तत्सदाध्यस्तं प्रत्यगद्वयचिद्घने ॥६॥

निरपेक्षशिवात्मैक्यज्ञानस्योदयमात्रतः ।
सकार्यमेतदज्ञानं नासीदस्ति भविष्यति ॥७॥

॥ इति सप्तश्लोकीप्रकरणम् ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# मनोलयप्रकरणम्

अन्तर्निष्ठो भवेद्योगी अन्तर्निष्ठः सदा सुखी ।
अन्तर्निष्ठस्तपोनिष्ठ अन्तर्भावं सदा कुरु ॥१॥

मनोमूलं न जानाति मूर्खो भवति पण्डितः ।
मनोमूलं भवेदेवमेवं जानाति पण्डितः ॥२॥

मनोमूलं भवेद्ब्रह्म ब्रह्ममूलमिदं जगत् ।
कथं ध्याता कथं ध्येयं ब्रह्मैवाहं न संशयः ॥३॥

देहमध्ये स्थितं ब्रह्म कथं मूढ न पश्यसि ।
मूढात्मा देहभावात्मा देहं सत्यं कथं भवेत् ॥४॥

जीवात्मा देहसंबद्धो देहातीतः परो मतः ।
सर्वं खलु इदं ब्रह्म इति मे निश्चिता मतिः ॥५॥

देहमध्ये स्थितं ब्रह्म कथं मूढ न पश्यसि ।
वाचा जल्पो वृथायं तु निःशब्दं ब्रह्म उच्यते ॥६॥

मायाब्रह्म कथं भिन्नं सूर्यरश्मी तथैव च ।
पुष्पगन्धं कथं भिन्नं जलतरंगं तथैव च ॥७॥

ब्रह्मरूपमिदं सर्वं ब्रह्मैवाहं न संशयः ।
मनोलयं भवेद्ब्रह्म ब्रह्ममूलमिदं जगत् ॥८॥

ब्रह्मनिष्ठो भवेद्योगी ब्रह्मनिष्ठः शिवात्मकः ।
ब्रह्मनिष्ठं शुचिष्मन्तं पवित्रमिदमुत्तमम् ॥९॥

॥ इति मनोलयप्रकरणम् ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

# ब्रह्मनिरामयाष्टकम्

एवं सर्वंश्चिदानन्द आदिमध्यान्तवर्जितः ।
पूर्णं आत्मप्रकाशं च सोऽहं ब्रह्म निरामयम् ॥१॥

एकमेव निराभासमभासं रूपवर्जितम् ।
भावाभावविहीनं च सोऽहं ब्रह्म निरामयम् ॥२॥

निर्गुणं परमं ब्रह्म सच्चिदानन्दमद्वयम् ।
तत्त्वमस्यादिवाक्येन सोऽहं ब्रह्म निरामयम् ॥३॥

एकमेवाद्वितीयं च नामरूपविवर्जितम् ।
एकमेव समं तत्त्वं सोऽहं ब्रह्म निरामयम् ॥४॥

आत्मतत्त्वमयं नित्यमेकमेवातिनिर्मलम् ।
पूर्णंब्रह्मनिराभासं सोऽहं ब्रह्म निरामयम् ॥५॥

एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ।
अहमेव निराकारं सोऽहं ब्रह्म निरामयम् ॥६॥

अव्यक्तं च वचोतीतमखण्डं खण्डवर्जितम् ।
निराधारं परं ब्रह्म सोऽहं निरामयम् ॥७॥

अक्षरं परमं ब्रह्म द्वैताद्वैतविवर्जितम् ।
मुनीश्वरहितं तत्त्वं सोऽहं ब्रह्म निरामयम् ॥८॥

॥ इति ब्रह्मनिरामयाष्टकम् ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# तत्त्वपञ्चकम्

जाग्रत्युद्भूतबाह्येन्द्रियविषयसमुल्लाससाक्षी शिवोऽहम् ।
नित्यानन्दस्तुरीयो विगतकलिमलः सर्वसाक्षी शिवोऽहम् ॥१॥

नाहं मनुष्यो न च देवयक्षो न ब्राह्मणक्षत्रियवैश्यशूद्रः ।
न ब्रह्मचारी न गृही वनस्थो भिक्षुर्न चाहं निजबोधरूपः ॥२॥

शिवात्मकमिदं सर्वं शिवादन्यन्न विद्यते ।
शिवोऽहमिति या बुद्धिस्तदेव ज्ञानमुत्तमम् ॥३॥

अहमेव परं ब्रह्म यदन्यन्नास्ति किंचन ।
प्रत्यगद्वय एवाहं शिव एव न संशयः ॥४॥

प्रत्यगात्मपरानन्दगुरोः सर्वस्य साक्षिणः ।
वासुदेवेन्द्रयतिनः कृतार्थोऽहमनुग्रहात् ॥५॥

॥ इति तत्त्वपञ्चकम् ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# अनुभवसोपानम्

शास्त्राचार्योपदेशेन तर्कैः शास्त्रानुसारिभिः ।
सर्वसाक्षितयात्मानं सम्यङ् निश्चित्य सुस्थिरम् ॥१॥

स्वात्मनोऽन्यतया भातं समस्तमविशेषतः ।
स्वात्ममात्रतया वुद्ध्वा पुनः स्वात्मानमद्वयम् ॥२॥

शुद्धं ब्रह्मेति निश्चित्य स्वयं स्वानुभवेन च ।
निश्चयं च स्वचिन्मात्रे विलाप्याविक्रियेऽद्वये ॥३॥

विलापनं च चिद्रूपं वुद्ध्वा केवलरूपतः ।
स्वयं तिष्ठेदयं साक्षाद्ब्रह्मवित्प्रवरो मुनिः ॥४॥

स्वस्वप्नः स्वप्रबोधेन स्वमात्रं भासते यथा ।
तथा जाग्रत्प्रपञ्चोऽपि स्वयं स्यात्स्वप्रबोधतः ॥५॥

स्वस्वप्नः स्वातिरेकेण यथा नास्ति तथैव च ।
स्वजाग्रत्स्वातिरेकेण नास्ति तेनाहमद्वयः ॥६॥

सोपानक्रमतो लब्धं विज्ञानं यस्य सुस्थिरम् ।
तस्य मुक्तिः परा सिद्धा सत्यमेव मयोदितम् ॥७॥

॥ इति अनुभवसोपानम् ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# शुकाष्टकम्

भेदाभेदौ सपदि गलितौ पुण्यपापे विशीर्णे
मायामोहौ क्षयमुपगतौ नष्टसंदेहवृत्ति ।
शब्दातीतं त्रिगुणरहितं प्राप्य तत्त्वावबोधं
निस्त्रैगुण्ये पथि विचरतां को विधिः को निषेधः ॥

हेम्नः कार्यं हुतवहगतं हेम चैवेति यद्व-
त्क्षीरे क्षीरं रसमिव रसे तोयमेवाम्बुमध्ये ।
एवं सर्वं समरसगतं त्वंपदं तत्पदार्थे
निस्त्रैगुण्ये पथि विचरतां को विधिः को निषेधः ॥

यद्वन्नद्यः समरसगताः सागरत्वं प्रपन्ना-
स्तद्वज्जीवाः समरसगताः स्वस्वरूपं प्रपन्नाः ।
वाचातीते समरसगते सच्चिदानन्दरूपे
निस्त्रैगुण्ये पथि विचरतां को विधिः को निषेधः ॥

कस्त्वं कोऽहं क इह भगवान्कोऽयमत्र प्रपञ्चः
स्वान्तर्वेद्ये गगनसदृशे पूर्णतत्त्वप्रकाशे ।
आनन्दाख्ये समरसघने बाह्यमन्तर्विलीने
निस्त्रैगुण्ये पथि विचरतां को विधिः को निषेधः ॥

कार्याकार्यं किमपि न तथा नैव कर्तृत्वमास्ते
जीवन्मुक्तस्थितिमिह गतो दग्धवस्त्रावभासः ।
एवं देहे प्रचलिततया दृश्यमानोऽपि मुक्तो
निस्त्रैगुण्ये पथि विचरतां को विधिः को निषेधः ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

दृष्ट्वा सर्वं परमममृतं स्वप्रकाशैकरूपं
बुद्ध्वात्मानं विमलमचलं सच्चिदानन्दरूपम् ।
ब्रह्माधारं सकलजगतां साक्षिणं निर्विशेषं
निस्त्रैगुण्ये पथि विचरतां को विधिः को निषेधः ॥

यत्स्वात्मानं सकलवपुषामेकमन्तर्बहिःस्थं
दृष्ट्वा पूर्णं खमिव सततं सर्वभाण्डस्थमेकम् ।
नान्यत्कार्यं किमपि च तथा कारणाद्भिन्नरूपं
निस्त्रैगुण्ये पथि विचरतां को विधिः को निषेधः ॥

यस्मिन्वस्तुन्यखिलभुवनं सैन्धवं सिन्धुमध्ये
पृथ्व्यम्ब्वग्निश्वसनगगनं जीवभावक्रमेण ।
यस्मिल्लीनं यदिदमखिलं सच्चिदानन्दरूपे
निस्त्रैगुण्ये पथि विचरतां को विधिः को निषेधः ॥

सत्यं सत्यं परमममृतं सर्वकल्याणहेतुं
मायाविद्यागहनदहनं शान्तिनिर्वाणदीपम् ।
नित्यं भक्त्या निगमसदृशं व्यासपुत्राष्टकं यः
प्रातःकाले पठति मनसा ब्रह्मनिर्वाणमेति ॥

॥ इति शुकाष्टकम् ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# श्रीगुरुभुजङ्गस्तोत्र

सदेकं परं केवलं निर्विकारं
निराकारमानन्दमात्रं पवित्रं।
स्वयं ज्योतिरव्यक्तमाकाशकल्पं
श्रुतिर्ब्रह्म यत्प्राह तस्मै नमस्ते ॥१॥

य एकोऽपि मायावशात्सर्वहेतु-
स्स्वसृष्टेषु विश्वेषु विष्वक्प्रवेशात्।
श्रुतौ जीव इत्युच्यते केवलात्मा
तुरीयाय शुद्धाय तस्मै नमस्ते ॥

नयत्स्यादिहद्रष्टृ विज्ञातृचान्य-
त्क्वचित्स्यात्परं द्रष्टृ विज्ञातृ वा यत्।
समस्तासु बुद्धिष्वनुस्यूतमेकं
नमो ब्रह्मणे जीवरूपाय तस्मै ॥३॥

मुखाद्दर्पणे दृश्यमानो न भिन्नो
मुखाभास एवं चिदाभास ईशः।
चितो नैव भिन्नोऽस्ति मायास्थितो यः
परेशाय तस्मै नमः केवलाय ॥४॥

यथा सूर्य एकः स्थितस्तोयपात्रे-
ष्वनेकेषु यो निर्विकारस्तथात्मा।
स्थितस्स्वीयबुद्धिष्वनेकासु नित्य-
श्चिदेकस्वरूपाय तस्मै नमस्ते ॥५॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

स्थितो नैकबुद्धिष्वयं जीव एको
विभुः कारणैकत्वतो नात्र नाना।
इति त्यक्त सर्वैषणापोवयस्य-
प्रसादाद्विजानन्ति तस्मै नमस्ते ॥६॥

मुखैः पञ्चभिर्भोग्य वस्तूनि भुङ्क्ते
ह्यभोक्तापि बुद्धिस्थितो बुद्धि तुल्यः।
करोतीव कर्माण्यकर्मापि यो वै
विचित्राय तस्मै नमस्तेऽस्तु नित्यम् ॥७॥

चिदाभास एवात्र कर्तेव भाति
स्वरूपापरिज्ञानतो यस्य नूनम्।
स्वबुद्धेरियं कर्तृभोक्तृत्वरूपा
मृषासंसृतिर्वै नमस्तेऽस्तु तस्मै ॥८॥

चिदाभास चैतन्य बुद्धिर्विविच्या-
त्र विज्ञाय संसारपन्थाद्विमुक्तः।
य एतद्विवेकावधि स्वस्यमेने
समस्तं च संसारमस्मै नमस्ते ॥९॥

न कस्यापि संसारलेशोपि कश्चि-
त्सकर्तृत्वभोक्तृत्वरूपो हि मिथ्या।
समस्तोऽप्ययं यत्स्वरूपो विवेका-
न्नमस्ते सदा नित्यमुक्ताय तस्मै ॥१०॥

जडाबुद्धिरात्मा परो निर्विकार-
श्चिदाभास एकोऽपि मिथ्यैव जीवः।
य एतद्विवेकी स्वतो नित्यमुक्त-
स्सदा निर्विकाराय तस्मै नमस्ते ॥११॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

चिदाभास एकोऽव्ययः कारणस्थो
य ईशस्स एवाह कार्यस्थितस्सन् ।
अभूज्जीवसंज्ञस्स एको हि जीव-
स्स भिन्नो नयस्मान्नमस्तेऽस्तु तस्मै ॥१२॥

यदज्ञानतो जीव नानात्वमाहु-
र्महामायया मोहिता वाददक्षाः ।
विवेकी वदत्येकमेवात्र जीवं
परित्यक्तवादो नमस्तेऽस्तु तस्मै ॥१३॥

चिदाभास एकोथनानेति सर्वे
विमुह्यन्ति वेदान्तिनोऽप्यन्यभक्त्या ।
तथाप्येक एवेति धीदाढ्यंदाता
य आत्मास्वभक्तस्य तस्मै नमस्ते ॥१४॥

मुखादर्शयोरेक एवैक्यतायां
मुखाभास एवं चिदाभास एकः ।
स्वतो ब्रह्मबिम्बैक्य मायैक्यतोयं
यदंशोखिलेशो नमस्तेऽस्तु तस्मै ॥१५॥

श्रुतिर्ह्येकतां ब्रह्मणो व्यक्तिनूनं
सजातीयभेदादिशून्यं ततोऽत्र ।
स्वमायैकवाप्यस्य युक्त्यापिसिद्धा
नमस्ते सदैकस्वरूपाय तस्मै ॥१६॥

न माया बहुत्वं तदा तत्प्रतिष्ठा
अनेकेश्वरास्सम्भवेयुर्हि नैतत् ।
क्वचिद्युज्यते यस्य मायाप्यनेका
नमस्ते जगद्धेतुभूताय तस्मै ॥१७॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

न मायां बिना यस्य कर्तृत्वमस्ति
प्रवेशोऽपि तस्मात्समस्तं मृषैव ।
महामायिने निर्विकाराय तस्मै
नमो ब्रह्मरूपाय शुद्धाय तुभ्यम् ॥१८॥

य आत्मा दृगेवानदृश्यं त्वनात्मा
विवेकाद्द्वयोरात्मदृष्टिस्सदृश्ये ।
विनष्टोद्भवेतादृशि स्वस्वरूपे
नमस्ते दृगात्मस्वरूपाय तस्मै ॥१९॥

सदृङ्निर्विकारस्स्वमाया जडेयं
दृगाभास एको मृषैवेति यस्य ।
जगत्कर्तृता तात्त्विकी नास्ति तस्मै
नमः केवला कर्तृरूपा च तुभ्यम् ॥२०॥

अमाय्येव मायी विभुश्शुद्ध आत्मा
सृजत्त्यत्त्यवत्यैकदानन्दपूर्णः ।
न मायां विना स्रष्टृता साक्षिता वा
विशुद्धात्मनो यस्य तस्मै नमस्ते ॥२१॥

चिदाभास एवाखिलोपाधिनिष्ठ-
स्समस्तैकसाक्षी स जीवेश संज्ञः ।
चिदंशोऽखिलात्मा न भिन्नोऽस्ति यस्मा-
न्नमस्ते विशुद्धात्मरूपाय तस्मै ॥२२॥

अहं सच्चिदानन्द आत्मैव शुद्धो
विमुक्तोऽस्मि वेदान्तवाक्यार्थबोधात् ।
इति स्वस्वरूपं विजानाति विद्वान्
परं यत्परभ्योपि तस्मै नमस्ते ॥२३॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

स्वमाया परिभ्रान्तचित्ता अजस्रं
परागवस्तु पश्यन्ति न प्रत्यगर्थम् ।
मुमुक्षुस्तु यं पश्यति प्रत्यगर्थं
परब्रह्मरूपाय तस्मै नमस्ते ॥२४॥

उपास्यो य ईशोऽस्त्वहं तस्य ईशा-
त्स कुर्वेव नैनं भजत्यत्र योऽस्मात् ।
विवेकी स एवाहमस्मीत्युपास्ते
यमात्मानमीशं नमस्तेऽस्तु तस्मै ॥२५॥

भयं भेददृष्टेर्भवत्युल्वणं वै
महान्तो न भेदं प्रपश्यन्ति तस्मात् ।
यदज्ञानतो दृश्यते भेद एवं
भिदा मोह हन्त्रे नमस्तेऽस्तु तस्मै ॥२६॥

विरिंचेन्द्रसूर्याग्निरुद्रेन्दुविष्णू-
न्प्रकल्प्यैक एवाद्वयस्सर्वसाक्षी ।
जगच्चक्रविभ्रान्तिकर्ता य आत्मा
न दृश्यते केनापि तस्मै नमस्ते ॥२७॥

जगज्जाग्रतिस्थूलमेतत्समानं
मनोवासितं स्वप्न आनन्दनिद्राम् ।
सुषुप्तौ स्वमेवाभिपश्यन्मुदास्ते
तुरीयो य आत्मा नमस्तेऽस्तु तस्मै ॥२८॥

समस्तादपि स्थूलसूक्ष्माच्छरीरा-
त्परः कारणाच्चान्य आत्मा समीपे ।
य एको विदूरेऽपि तिष्ठन् जनानां
महिम्नि स्वकीये च तस्मै नमस्ते ॥२९॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

यमाश्रित्य नास्तीति चास्तीति वेदे
प्रवृत्तो विरुद्धोऽपि वादोऽखिलात्मा ।
नमस्तेऽङ्घ्रिपाण्यादिहीनाय नित्यं
समस्ताङ्घ्रिपाण्यादियुक्ताय तस्मै ॥३०॥

अणोरप्यणीयांसमात्मानमेकं
महान्तं महद्वस्तुनश्चेतनेभ्यः ।
परं चेतनं नित्यतो वेद नित्यं
यमेवेह विद्वान् नमस्तेऽस्तु तस्मै ॥३१॥

यदानन्दलेशोपभोगेन सर्वे
सदानन्दिनस्सम्भवंत्यत्र तस्मै ।
सदानन्दसन्दोहपूर्णार्णवाय
प्रसन्नाय तुभ्यं नमः केवलाय ॥३२॥

यमुत्सृज्य मर्त्या भजन्त्यन्यदेवा-
न्न तेषां विमुक्तिः फलं किंतु तुच्छम् ।
श्वपुच्छं गृहीत्वा तरिष्यन्ति के वा
समुद्रं ह्यपारं नमस्तेऽस्तु तस्मै ॥३३॥

यथा विध्युपान्तौ फलं दास्यतीश-
स्तथा विष्णुरुद्रेन्द्रवह्न्याद्युपान्तौ ।
फलं दास्यति ब्रह्म यद्धीशसंज्ञ-
स्स्वकर्मानुसारं नमस्तेऽस्तु तस्मै ॥३४॥

न यद्ब्रह्ममोक्षप्रदंस्यात्कदाचि-
द्विनेहैव मुक्तिप्रदं ज्ञानमेकम् ।
न मोक्षो कृतः कर्मणातः कृतेन
प्रपन्नार्तिहन्त्रे नमस्तेऽस्तु तस्मै ॥३५॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

इदं नेति नेतीत्यमूर्तं च मूर्तं
निरस्यैव सर्वं जगद्दृश्यमेतत् ।
निषेधावधिर्ब्रह्म यच्छिष्यते वै
मनोवागगम्याय तस्मै नमस्ते ॥३६॥

परित्यज्य यस्तस्य सम्यग्विचारं
प्रवर्तेत यस्तीर्थयात्राजपादौ ।
करस्थान्नमुत्सृज्य लेढीति हस्तं
नयस्योदयस्तस्य तस्मै नमस्ते ॥३७॥

न चेत्प्राणवर्गेष्वयंस्याज्जडत्वा-
त्कथं प्राणनाडी क्रियाकारितैषाम् ।
अतो यस्य सिद्धास्तिता युक्तितोऽपि
प्रपञ्चप्रकाशाय तस्मै नमस्ते ॥३८॥

भयं यद्विदां नास्ति मृत्युश्च नूनं
बिभेत्येव वाय्वादि सर्वं च यस्मात् ।
शरीरेहमित्यत्र बुद्धेर्भयं स्या-
न्नमस्ते भयायाशरीराय तस्मै ॥३९॥

गुरौ भक्तियुक्तैरिहैवेश्वरोय-
स्सुविज्ञेय आत्मान्यथा ह्यब्दकोट्या ।
अविज्ञेय एकस्स्वबुद्धिस्थितोऽपि
प्रियायाऽखिलेभ्योऽपि तस्मै नमस्ते ॥४०॥

समस्तात्प्रियो देह एवाक्षमस्या-
त्प्रियप्राण एवाक्षतोऽपि प्रियेतः ।
प्रियः प्रत्यगात्मैव भोक्तापरो य-
स्स्वतोतिप्रियायेह तस्मै नमस्ते ॥४१॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

प्रियादात्मनोन्यन्न विद्येत किंचि-
त्क्वचित्कारणान्नैव भिद्येत कार्यम्ः।
य आत्मा नमस्तस्य हेतुर्नमस्ते
निदानाय सर्वस्य दृश्यस्य तस्मै ॥४२॥

समस्तं जगत्कारणान्नैव भिन्नं
समस्तात्मनः केवलादद्वितीयात् ।
परब्रह्मणो व्याकृतेशाच्च यस्ता-
न्नमस्ते क्षरायाक्षरायापि तस्मै ॥४३॥

यतः कारणान्नेह कार्यं विभिन्नं
ततो बृंहणं नैव भिन्नं जगत्स्यात् ।
समस्तं जगद्ब्रह्म तच्चास्मि विद्वा-
नुपास्तेयमेकं नमस्तेऽस्तु] तस्मै ॥४४॥

यथा मृद्विकारो मृदो नैव भिन्न-
स्तथा चिद्विकारश्चितो नैव भिन्नः।
अतस्सर्वमेतच्चिदेवेति विद्वान्
विजानाति यद्ब्रह्म तस्मै नमस्ते ॥४५॥

जगद्यस्य सर्वं शरीरं जगन्न-
प्रमातृ प्रमाणप्रमेयात्मको यः ।
समस्तान्तरायाऽखिलेशाय तस्मै
नमस्सच्चिदानन्दरूपाय तुभ्यम् ॥४६॥

विदुर्यं न सर्वेऽपि यो वेत्ति सर्वं
समस्तेषु भूतेषु तिष्ठन्स्वयं यः।
समस्तान्तरः प्रेरयत्येव सर्वा-
न्नमस्ते समस्तान्तरेशाय तस्मै ॥४७॥


CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

न देहेन्द्रियप्राणधीभूतवृन्दं
न संसार्यहं किंतु चिन्मात्रमेकम्।
परं चापरं ब्रह्मविद्याद्विशुद्धं
तदस्तीति यद्वेद तस्मै नमस्ते ॥४८॥

यथा स्वप्नदृष्टाश्च हस्त्यादि मिथ्या
तथा सर्वमेतज्जगद्भाति मिथ्या।
अधिष्ठानमात्रं जगद्द्रष्टृ सत्यं
विशुद्धं च यद्ब्रह्म तस्मै नमस्ते ॥४९॥

परा चापरा यस्यं मायाद्विधेयं
जगत्कर्तृतामक्रियस्यातनोति ।
स्वतो द्रष्टृदृश्यातिरिक्ताय तस्मै
नमः केवलायाव्ययायात्मनस्तु ॥५०॥

विशुद्धात्मतत्त्वापरिज्ञानमूलं
विशेषावभासं सुखित्वादिरूपम्।
विशुद्धात्मतत्त्वे परिज्ञात एत-
त्कचिन्नास्ति यस्मिन्नमस्तेऽस्तु तस्मै ॥५१॥

नहि स्रक्परिज्ञानतस्सर्पभासं
क्वचिद्विद्यते सर्पता कल्पिता स्यात्।
तथा कल्पितं सर्वमेतच्च यस्मि-
न्नमस्ते समस्तावभासाय तस्मै ॥५२॥

सुषुप्तौ न संसारलेशोऽस्ति कश्चि-
त्प्रबोधेऽखिलाहं कृतौ दृश्यते यम्।
अतोऽहं कृतेरेव संसार इत्थं
न वै संसृतिर्यस्य तस्मै नमस्ते ॥५३॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

न शास्ता न शिष्यो न शास्त्रं न विश्वं
न शाक्तं च शैवं मतं वैष्णवं वा।
सुषुप्तौ तदानीं यदस्त्यात्ममात्रं
स्वतो निष्प्रपञ्चाय तस्मै नमस्ते ॥५४॥

जडानां प्रवृत्तिः स्वतो नास्ति यस्मा-
द्विभोश्चेतनत्वात्प्रवृत्तिः प्रवृत्ता।
मनः प्राण देहेन्द्रियव्याकृतानां
नमस्ते चिदात्मस्वरूपाय तस्मै ॥५५॥

मनः प्राणदेहेन्द्रियव्याकृतानि
स्वतः काष्ठतुल्यानि यत्सन्निधानात्।
स्वयं चेतनानीवभांत्येवमोहा-
ज्जडेभ्यः परो यो नमस्तेऽस्तु तस्मै ॥५६॥

बहिर्बुध्यते प्राणिबुद्धिः पदार्था-
न्नयं बुध्यते प्राणनाथं स्वसंस्थम्।
समस्तान्तरात्मानमेकं च तस्मै
नमस्ते विरिञ्चादिधीबोधयित्रे ॥५७॥

परं यत्स्वरूपं विदुर्नापि देवाः
कुतोऽन्ये मनुष्यादयो बाह्यचित्ताः।
तदेवाहमस्मीति भक्तास्त्वजस्रं
भजन्त्यद्वितीयं नमस्तेऽस्तु तस्मै ॥५८॥

समस्तेषु देहेषु सूर्येऽपि तिष्ठन्
य एकोऽखिलात्मा समस्तैकसाक्षी।
स एवाहमस्मीति वेदान्तविद्भिः
सदोपास्य तत्त्वाय तस्मै नमस्ते ॥५९॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अहं विश्वतस्तेजसः प्राज्ञरूपो
विराट्सूत्रमायेशरूपान्न भिन्नः ।
उपाधौ विभिन्नेऽपि किं त्वस्मि सोऽहं
यमेवं भजन्वेद तस्मै नमस्ते ॥६०॥

समस्तानि कर्माणि सन्त्यज्य विद्वां-
स्तदेवाहमस्मीत्युपास्ते ह्यजस्रम् ।
यदेवाह सर्वागमांतैकवेद्यं
नमस्तेऽनिशं चिन्तनीयाय तस्मै ॥६१॥

न कृत्या कृतेः प्रत्यवायः क्वचित्स्या-
दभावात्कथं भाव उत्पत्स्यते च ।
अहं प्रत्यवायीति कृत्याकृते स्या-
मयं यस्य मोहान्नमस्तेऽस्तु तस्मै ॥६२॥

अधर्मोऽयमेवायमेवात्र धर्मो
भवेदित्ययं मोह एवाऽखिलानाम् ।
यदज्ञानिनां प्रत्यवायप्रदंस्या-
त्कचिन्नह्यभावो नमस्तेऽस्तु तस्मै॥६३॥

अधर्मं जहत्स्वं विहाय प्रशान्ता
भजन्त्यत्र नूनं स्वरूपं यदीयम् ।
स्वरूपं विचार्यामृतेरासुषुप्ते-
र्नमस्तेऽस्तु तस्मै विमुक्तिप्रदाय ॥६४॥

न वै बद्धता मुक्तता वा कदाचि-
त्कचिन्नित्यमुक्तस्य किंचात्मनोऽन्तः ।
बहिश्चेतसोऽन्तश्च गत्यागती ते
नमश्चित्तविक्षेपहर्त्रेऽस्तु तस्मै ॥६५॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

यथा क्षीणचित्तस्तथैवात्मनिष्ठः
पुमान्नित्यमुक्तो भवेदद्वितीयः ।
यथा चेतसो क्षीणता यत्प्रसादा-
त्तथा त्वत्प्रसादाय तस्मै नमस्ते ॥६६॥

प्रसन्ने त्वयि प्राणिनां किन्न लभ्यं
परस्तत्प्रसादान्न लाभोऽस्ति कश्चित् ।
बुधोऽतोऽनिशं यत्प्रसादाभिकाङ्क्षी
नमस्ते प्रपन्नप्रसन्नाय तस्मै ॥६७॥

पृथिव्यादियुक्ताः परब्रह्मनिष्ठा
न मुख्या भवन्त्यत्र जन्माऽस्ति तेषाम् ।
निरस्ताखिलोपाधिनिष्ठो हि मुख्यो
नयस्येह जन्मासि तस्मै नमस्ते ॥६८॥

न मुख्यं सुषुप्तेर्धिष्ठानतोन्य-
त्सुषुप्तेरधिष्ठानमात्रं हि मुख्यम् ।
यदज्ञानतोदृप्तबालाकिलेत-
न्नृपाद्वेद चैवं नमस्तेऽस्तु तस्मै ॥६९॥

विरिञ्चादिलोकादिहावृत्तिरस्ति
क्वचिन्नात्मलोकादनावृत्तिरस्मात् ।
ध्रुवो ह्यात्मलोको ध्रुवानात्मलोका-
त्परो योऽस्ति चैको नमस्तेऽस्तु तस्मै ॥७०॥

परं वेद सन्मात्रमुद्दालकेन
स्वपित्रोपदिष्टो यदा श्वेतकेतुः ।
यमात्मानमात्मस्थमव्यक्तमेतं
नमस्तेऽनिशं सत्स्वरूपाय तस्मै ॥७१॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

भृगुर्वेद पित्रोपदिष्टोऽन्तरेव
प्रकृष्टः परब्रह्मरूपात्मलोकम् ।
अनन्ताद्वयानन्दविज्ञानसत्यं
यमेकं विशुद्धाय तस्मै नमस्ते ॥७२॥

विहायैव कोशात्परं पञ्चवेद-
स्वरूपं यदानन्दकोशस्य पुच्छम् ।
मुमुक्षुस्सुषुप्तेरधिष्ठानमेकं
सदात्मस्वरूपाय तस्मै नमस्ते ॥७३॥

अनन्तानि शास्त्राण्यधीत्यापि विद्वा-
न्न दुःखेतरो नारदोऽनात्मवित्वात् ।
ऋषिर्मानसाद्वेदयं शोकहृत्यै
नमस्ते सुखौघाय तस्मै विभून्ने ॥७४॥

ऋषेर्याज्ञवल्क्याद्विदेहो महात्मा
यदेवाभयं ब्रह्मसम्यग्विदित्वा ।
स्वमेवाभयं तद्बभूद्वेववेद्यं
समस्ताभयाप्याय तस्मै नमस्ते ॥७५॥

विदित्वात्र भूमानमेनश्चिदेस्ति
प्रवाच्यं किमु प्राणवित्पापनाशे ।
अतः प्राणविद्यामनादृत्य विद्वा-
नुपास्तेयमीशं नमस्तेऽस्तु तस्मै ॥७६॥

अजस्रान्नदानं परित्यज्य जान-
श्रुतेरैक्यवन्ध्यागमध्वंसवाक्यात् ।
स वै प्राणवित्प्राण उत्कर्षवांस्त-
त्परोस्माद्य आत्मा नमस्तेऽस्तु तस्मै ॥७७॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

रवीन्द्वग्नितेजो जगद्भासकं चे-
न्न तस्यापि चित्सन्निधानं न तत्स्यात् ।
न यत्सन्निधानं विना किंचिदस्ति
कचिद्वस्तु तस्मै नमो ज्योतिषे च ॥७८॥

परंज्योतिषां ज्योतिरात्माख्यमेत-
द्रवीन्द्वादिवुध्यादिविद्योतकं यत् ।
विदित्वैव नूनं नरो ब्रह्मणस्स्या-
दमर्त्यश्च तस्मै नमस्स्वात्मने ते ॥७९॥

यथाश्वत्थवृक्षे स्वदेहे च तुल्यं
स्वमेवाब्रवोद्वासुदेवोऽर्जुनाय ।
तथा यस्य साम्यं विजानाति विद्वान्
नमस्ते समस्तात्मरूपाय तस्मै ॥८०॥

द्विजे पुल्कसे हस्तिनि स्वे शरीरे
समस्सात्त्विके राजसे तामसे च ।
य आत्मागुणस्ते रसं स्पृष्ट ईशो
नमस्ते सदा निष्कलङ्काय तस्मै ॥८१॥

यमाश्चर्यवद्वक्ति कश्चिच्छृणोति
प्रशान्तस्तु जानाति नह्यप्रशान्तः ।
विदित्वापि साक्षात्करोत्यत्र नान्य-
श्चिदस्मीति दिक्ष्याय तस्मै नमस्ते ॥८२॥

पतीदेवदैत्यौघयोः पद्मजाद्यं
चतुर्वारमाकर्णयन्तौ तथाऽपि ।
न जानाति कश्चित्तयोर्वेद चान्यो
ह्यतो दुर्वितर्काय तस्मै नमस्ते ॥८३॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

शरीरेन्द्रियप्राणविज्ञानशून्ये-
ष्विहैकैकमात्मेति दृप्ता वदन्ति ।
तथा बुद्धिसम्यग्विचारा समर्था
यदज्ञानमोहाय तस्मै नमस्ते ॥

अनेकत्वकर्तृत्वभोक्तृत्वधर्म-
स्स आत्मा विभुश्चिद्गुणश्चेति केचित् ।
न कर्तैव भोक्ता क्वचिच्चेति चान्ये
यदज्ञावदन्तीह तस्मै नमस्ते ॥८५॥

अनेकात्मको प्रेरकोऽन्यो नहीश-
स्त्विति प्राहुरेकेन चास्तीति चान्ये ।
विवादास्पदं नैव मायाविना यः
नमस्तेऽस्तु तस्मै विवादात्पराय ॥८६॥

विवादो निवर्तेत यस्य प्रसादा-
त्स्वरूपप्रकाशे जगद्भावनस्य ।
निवृत्ते विवादे पुनर्नैवलोके
भ्रमंत्यद्वितीयाय तस्मै नमस्ते ॥८७॥

विभुं चित्तनिष्ठं यदङ्गुष्ठमात्रं
पुराणं पुमांसं वदन्त्यत्र वेदाः ।
जनानां हृदङ्गुष्ठमात्रं यतोऽस्मा-
दनङ्गुष्ठमात्राय तस्मै नमस्ते ॥८८॥

भ्रुवोर्मध्यमेवा विमुक्तं मुनीनां
महाक्षेत्रमित्यत्र वृद्धेश्श्रुतेश्च ।
नवा वारणासीं पुरीं गन्तुमिच्छे-
त्स्वरूपे स्थितो यस्य तस्मै नमस्ते ॥८९॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

शरीरं यथाहं मतिस्सर्वजन्तो-
स्तथा मुक्तिबुद्धिश्च काशीमृतेर्वा।
स्वरूपं प्रकाशं विना यस्य मुक्ति-
र्नेवै सम्भवेत्कापि तस्मै नमस्ते ॥९०॥

स्वरूपप्रकाशैकहेतुर्हि यस्य
प्रकृष्टादमांतार्थं सम्यग्विचारः।
अतो यत्प्रकाशाय वेदान्तनिष्ठो-
ऽनिशं स्याद्विवेकी नमस्तेऽस्तु तस्मै ॥९१॥

वदन्तश्च रुद्रादयोऽप्यात्मतत्त्वं
न जानन्त्यतः केऽपि वेदान्तनिष्ठाः।
ततस्तानिहोत्सृज्य वेदान्तनिष्ठो
भवेद्यत्प्रबोधाय तस्मै नमस्ते ॥९२॥

सुरेन्द्रो विदित्वैव यस्य स्वरूपं
समस्तादघाद्वृत्रहत्यादिरूपात् ।
विमुक्तो हि वेदान्तनिष्ठो मुदास्ते
निरस्याभिमानं नमस्तेऽस्तु तस्मै ॥९३॥

यदीयं स्वरूपं विचार्यैव तिष्ठन्
सदा वन्दनीयोऽमरैरिन्द्रमुख्यैः।
विशुद्धो ह्ययं देववन्द्यत्वयोग्य-
स्सवै चित्स्वरूपो नमस्तेऽस्तु तस्मै ॥९४॥

स्वयं शुद्ध एवान्य शुद्धिं ददाति
कचिन्नह्यशुद्धोऽन्यशुद्धिप्रदस्स्यात् ।
स्मृतश्शुद्धिदस्सर्वजन्तोर्यं आत्मा
विशुद्धः पवित्राय तस्मै नमस्ते ॥९५॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

सकृत्संस्मृतश्चेत्समस्तं च पापं
दहत्यग्निवद्यस्त्विहात्यन्तदीप्तः ।
चिदेवाहमित्येव बुद्धौ प्रवेशः
स्वदीप्तिर्नमस्तेऽस्तु तस्मै महिम्ने ॥९६॥

नहि स्नानदानादिना पापनाशः
कुतस्संस्कृतिः क्वापि नश्येत्कदापि ।
विना यत्स्मृतिं स्मृत्युपायं च मुक्त्वा
स्मरत्पापहन्त्रे नमस्तेऽस्तु तस्मै ॥९७॥

अनात्मन्यहन्ताभिमानं निरस्य
स्वरूपप्रकाशस्ततस्सर्वपापम् ।
न संस्कृत्य नात्माश्रयं स्याद्विनष्टं
स्मृतेर्यत्प्रकाशे तु तस्मै नमस्ते ॥९८॥

अनाकर्ण्यवेदान्तभाष्यं समग्रं
न कस्यापि यत्स्मृत्युपायोऽस्ति कश्चित् ।
अतस्तच्चिकित्सा ततो यस्य जाता
नमस्ते दयालुस्वरूपाय तस्मै ॥९९॥

समस्तागमांता निहृव्याचिकीर्षु-
स्स्वयं शङ्कराचार्यरूपावतीर्णः ।
कृतव्याससूत्रादिभाष्यो य आत्मा
स्वरूपैक्यधीराय तस्मै नमस्ते ॥१००॥

चतुर्भिः प्रशान्तैस्स्वशिष्यैर्युतस्सन्
भुवं पर्यटन्नात्मनिष्ठोऽखिलात्मा ।
स्वभाष्यप्रचारं सदाकारयन् यो
विभात्यद्वितीयाय तस्मै नमस्ते ॥१०१॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

विराट्सूत्रमायेशतुर्यस्वरूपैः
　　क्रमात्तोटकाचार्यनामादिसंज्ञैः　।
चतुर्व्यूहवेषैस्स्वशिष्यैर्युताया-
　　द्वयायात्मने ते नमो निर्गुणाय ॥१०२॥

अजं कर्मठं विश्वरूपं विदित्वा
　　तुरीयाश्रमं चाथ तस्मै प्रदत्वा ।
व्यधा दृश्यशृङ्गाश्रमेशारदार्चां
　　परं तत्त्वरक्षाय तस्मै नमस्ते ॥१०४॥

य आचार्यभाष्याण्यधीत्यैव भक्त्या
　　लभन्ते निजानन्दमात्मस्वरूपम् ।
गुरुस्तैरयं वन्द्य आत्मात्मविद्भि-
　　स्ततस्सर्ववन्द्याय तस्मै नमस्ते ॥१०४॥

नमश्शङ्कराचार्य तुभ्यं पुरस्ता-
　　न्नमः पृष्ठतः पार्श्वतश्चाथ ऊर्ध्वं ।
नमस्सर्वतस्सर्वरूपाय तस्मै
　　विशुद्धात्मने ब्रह्मणे ते नमस्ते ॥१०५॥

अहं देवबुद्धया तवैवास्मि दासो
　　ह्यहं जीवबुध्यास्मि तेनैकदेशः ।
त्वमेवास्म्यहं त्वात्मबुद्धया तथापि
　　प्रसीदान्वहं देहबुद्धया नमस्ते ॥१०६॥

सभाष्यार्थं आशुस्फुरत्यन्तकाले
　　चिदाभासचैतन्यदृवत्वत्प्रसादात् ।
गतिर्नान्यथा मे समस्तापराधं
　　क्षमस्वाखिलात्मन्नमस्तेऽस्तु नित्यम् ॥१०७॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

नमो भाष्यवृन्दाय भाष्योपदेष्ट्रे
नमो भाष्यकृद्भ्यो नमो भाष्यविद्भ्यः ।
नमो भाष्यवृन्दार्थभृताय भूम्ने
विशुद्धात्मने ब्रह्मणेऽस्मै परस्मै ॥१०८॥

शतोर्ध्वाष्टकश्लोकमेतद्भुजङ्ग-
प्रयातं पठेद्योऽत्र भक्त्या त्वदीयम् ।
चिदाभासचिद्रूपमेकं स्मरन्स्व-
स्वरूपेण नूनं नमस्तेऽस्तु तस्मै ॥१०९॥

भुजङ्गप्रयातार्थमत्यन्तभक्त्या
सकृद्वा स्मरेत्प्रत्यहं श्रीगुरोर्यः ।
निरस्तान्धकारस्स आनन्दरूपं
व्रजत्यच्युतं त्वां त्वदीयप्रसादात् ॥११०॥

अहं ब्रह्मभूत्वापि नेति भ्रमोऽभू-
त्तदीयस्वरूपावबोधात्पुरा मे ।
गुरो त्वत्प्रसादाद्विमुक्तोऽहमस्मि
चिदाभासचिद्रूप आत्मा विशुद्धः ॥१११॥

अतो बुद्धिमांस्त्वत्प्रसादाय नित्यं
भुजङ्गप्रयातं पठेद्वा तदर्थम् ।
स्मरेद्वा गुरो ते प्रणम्यैव भूय-
श्चिदाभासचिद्रूपमेकं परं तत् ॥११२॥

मुनीन्द्रैः पुराणैरनुध्येयमीशं
विरिञ्चादिभिस्सर्वदेवैश्च वन्द्यम् ।
कथं त्वामहं स्तोतुमिच्छन् भवन्तं
क्व वा साधयेन्नेह किं किं महेश ॥११३॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

कृपा ते कृपालो विमुग्धं विशुद्धं
करोतीह मूकं च वाचलमीशम् ।
अतस्त्वत्कृपावैभवेनैव मेत-
त्कृतं मे क्षमस्वाखिलात्मन् नमस्ते ॥११४॥

॥इति श्रीगुरुभुजङ्गस्तोत्रं सम्पूर्णम्॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# शिवकवचस्तोत्रम्

अस्य श्रीशिवकवचस्तोत्रमहामन्त्रस्य ऋषभयोगीश्वर ऋषिः। अनुष्टुप् छन्दः। श्रीसाम्बसदाशिवो देवता ॐ बीजं। नमः शक्तिः। शिवायेति कीलकं मम श्रीसाम्बसदाशिवप्रीत्यर्थे जपे विनियोगः। ॐ सदाशिवाय अंगुष्ठाभ्यां नमः। नं गङ्गाधराय तर्जनीभ्यां नमः। मं मृत्युंजयाय मध्यमाभ्यां नमः। शिं शूलपाणये अनामिकाभ्यां नमः। वां पिनाकपाणये कनिष्ठिकाभ्यां नमः। यं उमापतये करतलकरपृष्ठाभ्यां नमः। ॐ सदाशिवाय हृदयाय नमः। नं गङ्गाधराय शिरसे स्वाहा। मं मृत्युञ्जयाय शिखायै वषट्। शिं शूलपाणये कवचाय हुं। वां पिनाकपाणये नेत्रत्रयाय वौषट्। यं उमापतये अस्त्राय फट्। भूर्भुवः सुवरोमिति दिग्बन्धः॥

ध्यानम्—

वज्रदंष्ट्रं त्रिनयनं कालकण्ठमरिन्दमम्।
सहस्रकरमत्युग्रं वन्दे शम्भुमुमापतिम्।

रुद्राक्षकङ्कणलसत्करदण्डयुग्मः फालान्तरालसितभस्मधृतत्रिपुण्ड्रः।
पञ्चाक्षरं परिपठन् स्वरमन्त्रराजं ध्यायेत्सदा पशुपतिं शरणं व्रजेथाः।

अतः परं सर्वविपत्प्रमोचनं वक्ष्यामि शैवं कवचं हिताय ते॥

ऋषभः—

नमस्कृत्वा महादेवं विश्वव्यापिनमीश्वरम्।
वक्ष्ये शिवमयं वर्म सर्वरक्षाकरं नृणाम्॥

शुचौ देशे समासीनो यथावत्कल्पितासनः।
जितेन्द्रियो जितप्राणश्चिन्तयेच्छिवमव्ययम्॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

हृत्पुण्डरीकान्तरसन्निविष्टं स्वतेजसा व्याप्तनभोऽवकाशम् ।
अतीन्द्रियं सूक्ष्ममनन्तमाद्यं ध्यायेत्परानन्दमयं महेशम् ॥

ध्यानावधूताखिलकर्मबन्धश्चिरं चिदानन्दनिमग्नचेताः ।
षडक्षरं न्याससमाहितात्मा शैवे निकुर्यात्कवचेन रक्षाम् ॥

मां पातु देवोऽखिलदेवतात्मा संसारकूपं पतितं गभीरे ।
तं नामदिव्यं परमन्त्रमूलं धुनोतु मे खर्वमघं हृदिस्थम् ॥

सर्वत्र मां रक्षतु विश्वमूर्तिर्ज्योतिर्मयानन्दघनश्चिदात्मा ।
अणोरणीयानुरुशक्तिरेकस्स ईश्वरः पातु भयादशेषात् ॥

यो भूस्वरूपेण बिभर्ति विश्वं पायात्स भूमेर्गिरिशोऽष्टमूर्तिः ।
योऽपां स्वरूपेण नृणां करोति संजीवनं सोऽवतु मां जलेभ्यः ॥

कल्पावसाने भुवनानि दग्ध्वा सर्वाणि यो नृत्यति भूरिलीलः ।
सकालरुद्रोऽवतु मां दवाग्नेर्वात्यादिभीतेरखिलाच्च तापात् ॥

प्रदीप्तविद्युत्कनकावभासो विद्या पराभीति कुठारपाणिः ।
चतुर्मुखस्तत्पुरुषस्त्रिनेत्रः प्राच्यां स्थितो रक्षतु मामजस्रम् ॥

कुठारखेटाङ्कुशशूलढक्कारुद्राक्षमालाग्निकणान् दधानः ।
चतुर्मुखो नीलरुचिस्त्रिनेत्रः पायादघोरो दिशि दक्षिणस्याम् ॥

कुन्देन्दुशङ्खस्फटिकावभासो वेदाक्षमालावरदाभयाङ्कः ।
त्र्यक्षश्चतुर्वक्त्र उरुप्रभावः सद्योधिजातोऽवतु मां प्रतीच्याम् ॥

वराक्षमालाभयटङ्कहस्तः सरोजकिञ्जल्कसमानवर्णः ।
त्रिलोचनश्चारुचतुर्मुखो मां पायादुदीच्यां दिशि वामदेवः ॥

वेदाभयेष्टाङ्कुशटङ्कपाशकपालढक्काक्षरशूलपाणिः ।
सितद्युतिः पञ्चमुखोऽवतान्मामीशान ऊर्ध्वं परमप्रकाशः ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

मूर्धानमव्यान्मम चन्द्रमौलिः फालं ममाव्यादथ फालनेत्रः।
नेत्रे ममाव्याद्भगनेत्रहारी नासां सदा रक्षतु विश्वनाथः ॥

पायाच्छ्रुती मे श्रुतिगीतकीर्तिः कपोलमव्यात्सततं कपाली।
वक्त्रं सदा रक्षतु पञ्चवक्त्रो जिह्वां सदा रक्षतु वेदजिह्वः ॥

कण्ठं गिरीशोऽवतु नीलकण्ठः पाणिद्वयं पातु पिनाकपाणिः।
दोर्मूलमव्यान्मम धर्मबाहुर्वक्षस्स्थलं दक्षमखान्तकोऽव्यात् ॥

ममोदरं पातु गिरीन्द्रधन्वा मध्यं ममाव्यान्मदनान्तकारी।
हेरम्बतातो मम पातु नाभिं पायात्कटिं धूर्जटिरीश्वरो मे ॥

ऊरुद्वयं पातु कुबेरमित्रो जानुद्वयं मे जगदीश्वरोऽव्यात्।
जङ्घायुगं पुङ्गवकेतुरव्यात्पादौ ममाव्यात्सुरवन्द्यपादः ॥

महेश्वरः पातु दिनादियामे मां मध्ययामेऽवतु वामदेवः।
त्रियम्बकः पातु तृतीय यामे वृषध्वजः पातु दिनान्त्ययामे ॥

पायान्निशादौ शशिशेखरो मां गङ्गाधरो रक्षतु मां निशीथे।
गौरीपतिः पातु निशावसाने मृत्युंजयो रक्षतु सर्वकालम् ॥

अन्तःस्थितं रक्षतु शङ्करो मां स्थाणुस्सदा पातु वहिस्स्थितं मां।
तदन्तरे पातु पतिः पशूनां सदाशिवो रक्षतु मां समन्तात् ॥

तिष्ठन्तमव्याद्भुवनैकनाथः पायद्व्रजन्तं प्रमथाधिनाथः।
वेदान्तवेद्योऽवतु मां निषण्णं मामव्ययः पातु शिवश्शयानम् ॥

मार्गेषु मां रक्षतु नीलकण्ठश्शैलादिदुर्गेषु पुरत्रयारिः।
आरण्यवासादिमहाप्रवासे पायान्मृगव्याध उदारशक्तिः ॥

कल्पान्तकालोग्रपटुप्रतापस्फुटाट्टहासोज्ज्वलिताण्डकोशः।
घोरारिफेनार्णवदुर्निवार महाभयाद्रक्षतु वीरभद्रः ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

पत्त्यश्वमातङ्गघटावरूथिनि सहस्रलक्षायुतकोटिभीषणम् ।
अक्षौहिणीनां शतमाततायिनां दद्यान्मृडो घोरकुठारधारया ॥

निहन्तु दस्यून् प्रलयानलार्चिर्ज्वलत्त्रिशूलं त्रिपुरान्तकस्य ।
शार्दूलसिंहर्क्षवृकादिहिंस्रान् सन्त्रासयत्वीश धनुः पिनाकः ॥

दुस्स्वप्न-दुश्शकुन-दुर्गति-दौर्मनस्य-दुर्भिक्ष-दुर्व्यसन-दुस्सहदुर्यशांसि ।
उत्पाततापविषभीतिमसद्ग्रहार्ति व्याधींश्च नाशयतु मे जगतामधीशः॥

ॐ नमो भगवते सदाशिवाय सकलतत्त्वात्मकाय सकलतत्त्वविदूराय सकललोकैककर्त्रे सकललोकैकभर्त्रे सकललोकैकसंहर्त्रे सकललोकैकगुरवे सकललोकैकसाक्षिणो सकलनिगमगुह्याय सकललोकवरप्रदाय सकलदुरितार्तिभञ्जनाय सकलजगदभयंकराय शशाङ्कशेखराय शाश्वतनिजावासाय निराभासाय निरामयाय निरातङ्काय निष्कलङ्काय निष्प्रपञ्चाय निर्द्वन्द्वाय निस्सङ्गाय निर्मलाय निर्गुणाय निरुपमविभवाय निराधाराय नित्यसिद्धपरिपूर्णसच्चिदानन्दाद्वयाय परमशान्तप्रकाशाय तेजोरूपाय तेजोमयाय तेजोधिपतये जय जय महारुद्र महारौद्र भद्रावतार महाभैरव कालभैरव कल्पान्तभैरव कपालमालाधर खट्वाङ्गचर्मखड्गधर पाशांकुश डमरुक त्रिशूल चाप बाण गदा शक्ति भिन्डिवाल तोमर मुसल मुसुण्ठि मुद्गर प्रास परिघ शतघ्नि चक्रायुध भीषणाकार सहस्रमुखदंष्ट्राकराल वदनविकटाट्टहासविस्फाटित ब्रह्माण्डमण्डल नागेन्द्रकुण्डल नागेन्द्रहार नागेन्द्रचर्मधर मृत्युञ्जय त्र्यम्बक त्रिपुरान्तक विरूपाक्ष विश्वेश्वर वृषवाहन विश्वरूप विश्वतोमुख सर्वतोमुख मां रक्षरक्ष ज्वलज्वल प्रज्वल प्रज्वल महामृत्युभयं शमय शमय नाशय नाशय रोगभयमुत्सादयोत्सादय विषसर्पभयं शमय शमय चोरान्मारय मारय मम शत्रूनुच्चाटयोच्चाटय शूलेन विदारय विदारय कुठारेण भिन्धि भिन्धि खड्गेन छिन्धि छिन्धि खट्वाङ्गेन व्यपोधय व्यपोधय शोधय


CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

शोधय मुसलेन निष्पेषय निष्पेषय बाणैस्सन्त्रासय सन्त्रासय ताडय ताडय रक्षांसि भीषय भूतान् विद्रावय विद्रावय कूश्माण्ड भूतभेताल मारीगणवद्धब्रह्मराक्षसान्सन्त्रासय सन्त्रासय ममाभयं कुरु कुरु वित्रस्तं मामाश्वासयाश्वासय दुःखातुरं मामानन्दयानन्दय नरक-भयान् मामुद्धरोद्धर सञ्जीवय सञ्जीवय क्षुत्तृष्णार्तं मामाप्या-ययाप्यायय दुःखातुरं मामामन्दयानन्दय शिवकवचेन मामाच्छा-दयाच्छादय त्र्यम्बक सदाशिव परमशिव नमस्ते नमस्ते नमः ॥

ऋषभः—

इत्येतत्परमं शैवं कवचं व्याहृतं मया ।
सर्वबाधाप्रशमनं रहस्यं सर्वदेहिनाम् ॥

यस्सदा धारयेन्मर्त्यश्शैवं कवचमुत्तमम् ।
न तस्य जायते क्वापि भयं शम्भोरनुग्रहात् ॥

क्षीणायुः प्राप्तमृत्युर्वा महारोगहतोऽपि वा ।
सद्यस्सुखमवाप्नोति दीर्घमायुश्च विन्दति ॥

सर्वदारिद्र्यशमनं सौमङ्गल्यविवर्धनम् ।
यो धत्ते कवचं शैवं स देवैरपि पूज्यते ॥

महापातकसङ्घातैर्मुच्यते चोपपातकैः ।
देहान्ते मुक्तिमाप्नोति शिववर्मानुभावतः ॥

त्वमपि श्रद्धया वत्स शैवं कवचमुत्तमम् ।
धारयस्व मया दत्तं सद्यश्श्रेयो ह्यवाप्स्यसि ॥

श्रीसूतः—

इत्युक्त्वा ऋषभो योगी तस्मै पार्थिवसूनवे ।
ददौ शङ्खं महारावं खड्गं चारिनिषूदन ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

पुनश्च भस्म सम्मन्त्र्य तदङ्गं परितोऽस्पृशत् ।
भुजानां षट्सहस्रस्य द्विगुणस्य बलं ददौ ॥

भस्मप्रभावात्संप्राप्तं बलैर्धार्यं धृतिस्स्मृतिः ।
स राजपुत्रश्शुशुभे शरदर्क इव श्रिया ॥

तमाह प्राञ्जलिं भूयस्सयोगी नृपनन्दनम् ।
एष खड्गो मया दत्तस्तपो मन्त्रानुभावतः ॥

सितधारमिमं खड्गं यस्मै दर्शयते स्फुटम् ।
स सद्यो क्षयते शत्रुस्साक्षान्मृत्युरपि स्वयम् ॥

अस्य शंखस्य निर्ह्रादं ये शृण्वन्ति तवाहिताः ।
ते मूर्छिताः पतिष्यन्ति न्यस्तशस्त्राविचेतनाः ॥

खड्गशङ्खाविमौ दिव्यौ परसैन्यविनाशकौ ।
आत्मसैन्यस्वपक्षाणां शौर्यतेजोविवर्धनम् ॥

एतयोश्च प्रभावेन शैवेन कवचेन च ।
द्विषट् सहस्रनागानां बलेन महतापि च ॥

भस्मधारणसामर्थ्याच्छत्रुसैन्यं विजेष्यसि ।
प्राप्य सिंहासनं पित्र्यं गोप्ता सुपृथिवीमिमाम् ।

इति भद्रायुषं सम्यगनुशास्य समातृकम् ।
ताभ्यां संपूजितस्सोऽथ योगी स्वैरगतिर्ययौ ॥

॥ इति श्रीस्कान्दपुराणे ब्रह्मोत्तरखण्डे शिवकवचम् ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# विष्णुकृतशिवस्तोत्रम्

महेशानन्ताद्यत्रिगुणरहितामेयविमल-
स्वराकारापारामितगुणगणाकारविवृते ।
निराधाराधारामरवरनिराकारपरम
प्रभापूराकारावरपर नमो वेदशिवते ॥१॥

नमो वेदावेद्याखिलजगदुपादानमयत-
स्स्वतन्त्रानामन्तानवधृतनिजाकारविरते ।
निवर्तन्ते वाचश्शिवमजरमप्राप्यमनसा
यतोऽशक्तास्स्तोतुं सकृदपि गुणातीत शिवते ॥२॥

त्वदन्यद्वस्त्वेकं नहि भुवि समस्तं न भवतो
विहीनं विश्वात्मन्नच परममस्तीश भवतः ।
ध्रुवं मायातीतस्त्वमसि सततं नात्रविशयो
न ते कृत्यं किञ्चित्क्वचिदपि नमोवार्यं शिवते ॥३॥

त्वयैवेमं लोकं निखिलममलं व्याप्य सततं
तथैवान्यं लोकं स्थितमनघ देवोत्तमविभो ।
त्वयैवैतत्सृष्टं जगदखिलमीशानभगव-
न्विलासोऽयं कश्चित्तव शिव नमो मेध्यशिवते ॥४॥

जगत्सृष्टं पूर्वं यदि शिवमुमाकान्त सततं
त्वया लीलामात्रात्तदपि सकलं रक्षितमभूत् ।
तदेवाग्रे फालप्रगटनयनाग्न्यद्भुतकणै-
र्जगद्दग्ध्वा स्थास्यस्यज हर नमो वर्ष्यं शिवते ॥५॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

विभूतीनामन्तो भवनभवतो भूतविलस-
न्निजाकार श्रीमन्नतवगुणसीमाप्यवगता ।
अतिद्व्यावृत्याद्य त्वयि सकलवेदाश्च चकिता
भवन्त्ये वा सामप्रकृतिक नमो वर्ष्य शिवते ॥६॥

विराड्रूपं यत्ते सकलनिगमागोचरमभू-
त्तदेवेदं रूपं भवति किमिदं भिन्नमथवा ।
न जाने देवेश त्रिनयनसुराराध्यचरण
त्वमोङ्कारो वेदस्त्वमसि हि नमो घोर शिवते ॥७॥

यदन्तस्तत्त्वज्ञा मुनिवरगणा रूपमनघं
तवैवं संचिन्त्य स्वमनसि सदानन्दनिरताः ।
ययुर्दिव्यानन्दं तदिदमथवा किन्नु न तथा
किमेतज्जानेहं शरणदनमश्शर्व शिवते ॥८॥

यया शक्त्या सृष्ट्वा जगदथ च संरक्ष्य बहुधा
ततस्संहृत्यैतन्निवससि तदाधारमथवा ।
इदं ते किं रूपं निरुपम न जाने हर विभो
निसर्गः को वा ते तमपि हि नमो भव्य शिवते ॥९॥

तवानन्तान्याहुश्शुचिपरमरूपाणि निगमा-
स्तदन्तर्भूतं सत्सदनपुनरुक्तं त्विदमपि ।
निरुक्तं छन्दोभिर्निलयनमिदं चानिलयनं
न विज्ञातं ज्ञातं सकृदपि नमो ज्येष्ठ शिवते ॥१०॥

तवाभूत्सत्यं चानृतमपि च सत्यं ऋतमभू-
दृतं सत्यं सत्यं ऋतमुभयधा रूपमकलम् ।
यतस्सत्यं सत्यं सममपि समस्तं तव विभो
ऋतं सत्यं सत्यं ऋतमपि नमो रुद्र शिवते ॥११॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तवामेयामेयं यदपि तवमेयं विरचितं
नवामेयं मेयं रचितमपि मेयं विरचितम् ।
नमेयं मेयंचेन्नखलु परमेयं परमयं
नमेयं नामेयं परमपि नमो देव शिवते ॥१२॥

तवाहारं हारं विदितमपि हारं विहरसे
नवाभारं हारी हरसि हर हारं नहरसि ।
नवाहारं हारं परतरविहारं परतरं
परं जाने पारं न च खलु नमो विश्व शिवते ॥१३॥

यदेतत्तत्त्वं ते समलमपि तत्त्वेन विदितं
स ते तत्त्वं तत्त्वं विदितमपि तत्त्वेन विदितम् ।
न चैतत्तत्त्वं चेन्नियतमपि तत्त्वं किमुभवे-
न्नते तत्त्वं तत्त्वं यदपि च नमो वेष्टय्य शिवते ॥१४॥

इदं रूपं रूपं सदसदमलं रूपमितिचे-
न्नजाने रूपं तत्परममविभिन्नं परतरं ।
यतो नान्यद्रूपं निरतमपि वेदैर्निगदितं
न जाने सर्वात्मन् क्वचिदपि नमोऽनन्त शिवते ॥१५॥

महद्भूतं भूतं यदपि च न भूतं तव विभो
सदा भूतं भूतं किमु न भवतो भूतविषयैः ।
यदा भूतं भूतं न भवति च भूतं च भवितुः
प्रभाभूतं भूतं भवति हि नमोऽधिष्ण शिवते ॥१६॥

वशीभूता भूतास्सततमपि भूतात्मकतया
न ते भूता भूतास्तव यदपि भूता विभुतया ।
यतो भूता भूतास्तवतु नहि भूतात्मकतया
न वा भूता भूताः क्वचिदपि नमो भूत शिवते ॥१७॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

न ते माया माया सततमपि मायामयतया
ध्रुवं माया माया त्वयि पठन मायामयमयी ।
यदा माया माया त्वयि न खलु तत्साधिकतया
न माया मायावी न परमियतस्ते शिव नमः ॥१८॥

यदन्तस्संवेद्यं विदितमपि वेदैर्न विदितं
न वेद्यं वेद्यं चेन्नियतमपि वेद्यं न विदितं ।
तदेवेदं वेद्यं विदितमपि वेदान्तनिकरैः
करावेद्यं वेद्यं जितमिति नमो तर्क्यं शिवते ॥१९॥

शिवं शैवं भावं शिवमपि शिवाकारमशिवं
न सत्यं शैवं तच्छिवमपि शिवं शैवमनिशं ।
शिवं शान्तं मत्वा शिवपरमतत्त्वं शिवमयं
न जानेतत्तत्त्वं शिवमिति नमो वेद्य शिवते ॥२०॥

यदज्ञात्वा तत्त्वं सकलमपि संसारपतितं
जगज्जन्मावृत्ति वहति सततं देहनिलयम् ।
यदेतज्ज्ञात्वै वा वहति च निवृत्ति परतरां
न जाने तत्तत्त्वं पदमिति नमोऽधिष्ण शिवते ॥२१॥

तदेवं यद्रूपं निगमविषयं मङ्गलकरं
न सृष्टं केनापि ध्रुवमिति विजाने शिव विभो ।
ततश्चित्ते शम्भो नहि मम विषादोद्यविकृति
प्रयत्नांल्लभ्येऽस्मिन्न किमपि नमः पूर्ण शिवते ॥२२॥

तवाकारं गूढं यदपरमचक्षुश्श्रुतिपरं
तदेवापीदं सन्नयनपदवीन्नात्र तनुते ।
कदाचित्किंचिद्वा स्फुरति कृपया चेतसि तव-
स्फुरद्रूपं भव्यं भवहर नमोनाद्य शिवते ॥२३॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

त्वमिन्दुर्भानुस्त्वं हुतभुगसि वायुश्च सलिलं
त्वमेवाकाशोऽपि क्षितिरसि तथात्मासि भगवन् ।
ततस्सर्वाकारस्त्वमसि भवतो भिन्नमणुवा-
नतत्सत्यं सत्यं त्रिनयन नमोऽनन्त शिवते ॥२४॥

विधुं धत्से नित्यं शिरसि मृदुकण्ठेऽपि गरलं
नवं नागाहारं सहितममलं भासुरतनौ ।
करे शूलं फाले ज्वलनमनिशं तत्किमिति ते
न तत्त्वं जानेऽहं भवहर नमः कृप्यशिवते ॥२५॥

तवापाङ्गस्पन्दो यदि भवति भव्यश्शुभकरः
कदाचित् कस्मिंश्चिल्लघुतरवरेऽपि प्रभवति ।
स एवैतल्लोकान् विरचयितुमल्पोऽपि स महान्
कृपाधारो धत्ते सुरवर नमोऽनन्तशिवते ॥२६॥

भवन्तं देवेशं शिवमितरगीर्वाणसदृशं
प्रमादाद्यः कश्चिद्यदि वदति चित्तेऽपि मनुते ।
स दुःखं लब्ध्वान्ते नरकमपि याति ध्रुवमिदं
ध्रुवं देवाराध्यामितगुण नमोऽनन्त शिवते ॥२७॥

प्रदोषे रत्नाढ्ये मृदुलतर सिंहासनवरे
भवानीमारूढामसकृदपि संवीक्ष्य भवता ।
अतस्सम्यग्नाट्यं प्रथितमपि वेदोऽपि वदति
प्रभावः को वा यं तव हर नमो द्वीप्य शिवते ॥२८॥

श्मशाने संचारस्तवकिल नते क्वापि गमनं
यतो विश्वं व्याप्याखिलमपि सदा तिष्ठति भवान् ।
विभुर्नित्यं शुद्धं शिवमयमतो व्यापकमिति
श्रुतिस्साक्षाद्वक्ति स्वयमपि नगस्सूर्यशिवते ॥२९॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

धनुर्मेरुश्शेषो धनुवरगुणो यानमवनि
स्तवेनेन्दूचक्रे निगमनिकरावाजिनिकराः ।
पुरो लक्ष्यं यन्ताविधिरिषु रहंचेति निगमः
किमेवं त्वध्येषो निगदति नमः पर्ण्य शिवते ॥३०॥

मृडं सत्त्वोपेतं भव मनघयुक्तं च रजसा
तमोयुक्तं शुद्धं हरमपि शिवं निष्कलमिति ।
वदत्येषो वंदस्त्वमसि तदुपास्यं ध्रुवमिदं
त्वमोङ्काराकारो ध्रुवमिति नमोऽनन्त शिवते ॥३१॥

जगत्सूक्ति बोधं व्रजति भवतो निर्गतमपि
प्रवृत्ति व्यापारं पुनरपि सुषुप्ति च सकलम् ।
त्वदन्यं त्वत्प्रख्यं व्रजति शरणं नेति निगमो
वदत्यद्धा सर्वं शिव इति नमस्तुत्य शिवते ॥३२॥

त्वमेको लोकानामधिपतिरुमानाथ जगतां
शरण्यः प्राप्यस्त्वं जलनिधिरिवानन्तपयसाम् ।
त्वदन्यो निर्वाणं नवितरति निर्वाणपतिर-
प्यतस्सर्वोत्कृष्टस्त्वमसि हि नमो नीप्य शिवते ॥३३॥

तवैवांशो भानुस्तपति विधुरप्येति पवनः
पवत्येषो वह्निर्ज्वलति सलिलं च प्रवहति ।
त्वदाज्ञाकारित्वं सकलसुरवर्गस्य सततं
त्वमेकस्स्वातन्त्र्यं वहसि हि नमोऽनन्त शिवते ॥३४॥

स्वतन्त्रोऽयं सोमस्सकलभुवनैकप्रभुरयं
नियन्ता देवानामयमिह नियन्तास्य न परः ।
शशिश्शुद्धो मायारहित इति वेदोऽपि वदति
स्वयं त्वामीशान्यं भयहर नमो रध्य शिवते ॥३५॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

नमो रुद्रानन्ताप्यघहर नमश्शङ्करविभो
नमो गौरीनाथ त्रिनयनशरण्याङ्घ्रिकमल ।
नमश्शर्वश्रीमन्ननघ महदैश्वर्यनिलय
स्मरारे पापारे जयजय नमस्सेव्य शिवते ॥३६॥

महादेवामेयानघ गुणगणग्राम सततं
नमश्शर्वेशातेश्वरहर नमस्ते पुनरपि ।
पुराराते शम्भो पुनरपि नमस्ते शिव विभो
नमो भूयो भूयश्शिव शिव नमोऽनन्त शिवते ॥३७॥

कदाचिद्गण्यन्ते निबिडनिपतद्वृष्टिकणिकः
कदाचिन्नक्षत्राण्यपि सिनितलेशाः कुशलिना ।
अनन्तैराकल्पं शिव गणगुणाश्चारुरसनै-
र्नं शक्यन्ते नूनं गणयितुमुतत्वापि सततम् ॥३८॥

मया विज्ञावेशा निशमपि वृतायेतु मनसा
सकामे नामेयास्सततमपराधा बहुविधाः ।
त्वयैव क्षन्तव्याः क्वचिदपि शरीरेण वचसा
कृतानैते नूनं शिव शिव कृपासागर विभो ॥३९॥

प्रमादाद्ये केचिद्विततमपराधा विधिहताः
कृतास्सर्वे तेऽपि प्रशममुपयांतुष्फडतरम् ।
शिव श्रीमन् शम्भो शिवशिव महेशेति च जपन्
क्वचिल्लिङ्गाकारे शिवहर वसामि स्थिरतरम् ॥४०॥

इति स्तुत्वा शिवं विष्णुः प्रणम्य च मुहुर्मुहु ।
निर्विण्णोन्यवसत्तत्र कृताञ्जलिपुटश्चिरम् ॥४१॥

सदाशिवः शिवं रूपमादायोवाच सर्वगः ।
भीषयन्नखिलान् भूतान् घनगम्भीरया गिरा ॥४२॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

मदीयं रूपममलं कथं ज्ञेयं भवादृशैः।
वेदैरपि हि नज्ञातमित्युक्त्वान्तर्दधे शिवः ॥४३॥

ततः परं विधिस्तत्र तपस्तप्तुं समारभे।
विष्णुश्च ज्ञाततत्त्वस्य ज्ञानार्थमतियत्नतः ॥४४॥

इति श्रीशिवरहस्ये सप्तमांशे भवानी शङ्करसंवादे
विष्णुकृतं शिवस्तोत्रं ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# रुद्रकवचम्

ॐ अस्य श्रीरुद्रकवचस्तोत्रमहामन्त्रस्य दुर्वासा ऋषिः। अनुष्टुप् छन्दः। त्र्यम्बकरुद्रोदेवता। ह्रां वीजं। श्रीं शक्तिः। ह्रीं कीलकम्। मम मानसाभीष्टसिध्यर्थे जपे विनियोगः॥ ह्रामित्यादि षड्-दीर्घष्षडङ्गन्यासः॥ ध्यानम्॥

शान्तं पद्मासनस्थं शशिधरमुकुटं पञ्चवक्त्रं त्रिनेत्रं
शूलं वज्रं च खड्गं परशुमभयदं दक्षिणाङ्गैर्वहन्तम्।
नागं पाशं च घण्टां डमरुकसहितं सांकुशं वामभागे
नानालङ्कारदीप्तं स्फटिकमणिनिभं पार्वतीशं नमामि॥

**दुर्वासा उवाच—**

प्रणम्य शिरसा देवं स्वयम्भुं परमेश्वरम्।
एवं सर्वगतं देवं सर्वदेवमयं विभुम्॥

रुद्रवमं प्रवक्ष्यामि अङ्गप्राणस्य रक्षये।
अहोरात्रमयं देवं रक्षार्थं निर्मितं पुरा॥

रुद्रो मे चाग्रतः पातु पातु पार्श्वौ हरस्तथा।
शिरो मे ईश्वरः पातु ललाटं नीललोहितः॥

नेत्रयोस्त्र्यम्बकः पातु मुखं पातु महेश्वरः।
कर्णयोः पातु मे शम्भुर्नासिकायां सदाशिवः॥

वागीशः पातु मे जिह्वामोष्ठौ पात्वम्बिकापतिः।
श्रीकण्ठः पातु मे ग्रीवां बाहूचैव पिनाकधृत्॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

हृदयं मे महादेव ईश्वरोऽव्यात्स्तनान्तरम् ।
नाभिं कटिं च वक्षश्च पातु शर्व उमापतिः ॥

बाहुमध्यान्तरं चैव सूक्ष्मरूपस्सदाशिवः ।
सर्वं रक्षतु मे शर्वो गात्राणि च यथाक्रमम् ॥

वज्रं च शक्तिदं चैव पाशांकुशधरं तथा ।
गण्डशूलधरान्नित्यं रक्षतु त्रिदशेश्वरः ॥

प्रस्थानेषु पदेचैव वृक्षमूले नदीतटे ।
सन्ध्यायां राजभवने विरूपाक्षस्तु पातु माम् ॥

शीतोष्णादथ कालेषु तुहिनद्रुमकण्टके ।
निर्मनुष्ये समे मार्गे त्राहि मां वृषभध्वज ॥

इत्येतद्रुद्रकवचं पवित्रं पापनाशनम् ।
महादेवप्रसादेन दुर्वासोमुनिकल्पितम् ॥

ममाख्यातं समासेन न भयं तेन विदन्ति ।
प्राप्नोति वरमारोग्यं पुण्यमायुष्यवर्धनम् ॥

विद्यार्थी लभते विद्यां धनार्थी लभते धनम् ।
कन्यार्थी लभते कन्यां न भयं विदन्ते क्वचित् ॥

अपुत्रो लभते पुत्रं मोक्षार्थी मोक्षमाप्नुयात् ।
त्राहि त्राहि महादेव त्राहि त्राहि त्रयीमय ॥

त्राहि मां पार्वतीनाथ त्राहि मां त्रिपुरान्तक ।
पाशं खट्वाङ्गदिव्यास्त्रं त्रिशूलं रुद्रमेव च ॥

नमस्करोमि देवेश त्राहि मां जगदीश्वर ।
शत्रुमध्ये सभामध्ये ग्राममध्ये गृहान्तरे ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

गमनेऽगमने चैव त्राहि मां भक्तवत्सल ।
त्वं चित्त्वं त्वं मानसं च त्वं बुद्धिस्त्वं परायणम् ॥

कर्मणा मनसा चैव त्वं बुद्धिश्च यथा सदा ।
सर्वज्वरभयं छिन्धि सर्वज्वरभयं छिन्धि ॥

सर्वग्रहभयं छिन्धि सर्वग्रहभयं छिन्धि ।
सर्वशत्रून्निवर्त्यापि सर्वव्याधिनिवारणम् ।
रुद्रलोकं सगच्छति रुद्रलोकं सगच्छत्योन्नम इति ॥

इति श्रीस्कन्दपुराणे दुर्वासः प्रोक्तं रुद्रकवचं सम्पूर्णम् ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# वेदान्तडिण्डिमः

वेदान्तडिण्डिमास्तत्त्वमेकमुद्घोषयन्ति यत् ।
आस्तां पुरस्तात्तत्तेजो दक्षिणामूर्तिसंज्ञितम् ॥१॥

आत्मानात्मा पदार्थौ द्वौ भोक्तृभोग्यत्वलक्षणौ ।
ब्रह्मैवात्मा न देहादिरिति वेदान्तडिण्डिमः ॥२॥

ज्ञानाज्ञाने पदार्थौ द्वावात्मनो बन्धमुक्तिदौ ।
ज्ञानान्मुक्तिर्निबन्धोऽन्यदिति वेदान्तडिण्डिमः ॥३॥

ज्ञातृ ज्ञेयं पदार्थौ दौ भास्यभासकलक्षणौ ।
ज्ञाता ब्रह्म जगद्ज्ञेयमिति वेदान्तडिण्डिमः ॥४॥

सुखदुःखे पदार्थौ द्वौ प्रियविप्रियकारकौ ।
सुखं ब्रह्म जगद्दुःखमिति वेदान्तडिण्डिमः ॥५॥

समष्टिव्यष्टिरूपौ द्वौ पदार्थौ सर्वसंमतौ ।
समष्टिरीश्वरो व्यष्टिर्जीवो वेदान्तडिण्डिमः ॥६॥

ज्ञानं कर्म पदार्थौ द्वौ वस्तुकर्त्रात्मतन्त्रकौ ।
ज्ञानान्मोक्षो न कर्मभ्य इति वेदान्तडिण्डिमः ॥७॥

श्रोतव्याश्राव्यरूपौ द्वौ पदार्थौ सुखदुःखदौ ।
श्रोतव्यं ब्रह्म नैवान्यदिति वेदान्तडिण्डिमः ॥८॥

चिन्त्याचिन्त्ये पदार्थौ द्वौ विश्रान्तिश्रान्तिदायकौ ।
चिन्त्यं ब्रह्म परं नान्यदिति वेदान्तडिण्डिमः ॥९॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

ध्येयाध्येये पदार्थौ द्वो धीसमाध्यसमाधिदौ ।
ध्यातव्यं ब्रह्म नैवान्यदिति वेदान्तडिण्डिमः ॥१०॥

योगिनो भोगिनो वापि त्यागिनो रागिणोऽपि च ।
ज्ञानान्मोक्षो न संदेह इति वेदान्तडिण्डिमः ॥११॥

न वर्णाश्रमसंकेतैर्न कर्मोपासनादिभिः ।
ब्रह्मज्ञानं विना मोक्ष इति वेदान्तडिण्डिमः ॥१२॥

असत्यः सर्वसंसारो रसाभासादिदूषितः ।
उपेक्ष्यो ब्रह्म विज्ञेयमिति वेदान्तडिण्डिमः ॥१३

वृथाक्रियान्वृथालापान्वृथावादान्मनोरथान् ।
त्यक्त्वैकं ब्रह्म विज्ञेयमिति वेदान्तडिण्डिमः ॥१४॥

स्थितो ब्रह्मात्मना जीवो ब्रह्म जीवात्मना स्थितम् ।
इति संपश्यतां मुक्तिरिति वेदान्तडिण्डिमः ॥१५॥

जीवो ब्रह्मात्मना ज्ञेयो ज्ञेयं जीवात्मना परम् ।
मुक्तिस्तदैक्यविज्ञानमिति वेदान्तडिण्डिमः ॥१६॥

सर्वात्मना परं ब्रह्म श्रोतुरात्मतया स्थितम् ।
नायानस्तत्त्वविज्ञप्ताविति वेदान्तडिण्डिमः ॥१७॥

ऐहिकं चामुष्मिकं च तापान्तं कर्मसंचयम् ।
त्यक्त्वा ब्रह्मैव विज्ञेयमिति वेदान्तडिण्डिमः ॥१८॥

अद्वैतद्वैतवादौ द्वौ सूक्ष्मस्थूलदशां गतौ ।
अद्वैतवादान्मोक्षः स्यादिति वेदान्तडिण्डिमः ॥१९॥

कर्मिणो विनिवर्तन्ते निवर्तन्त उपासकाः ।
ज्ञानिनो न निवर्तन्त इति वेदान्तडिण्डिमः ॥२०॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

परोक्षासत्फलं कर्म ज्ञानं प्रत्यक्षसत्फलम् ।
ज्ञानमेवाभ्यसेत्तस्मादिति वेदान्तडिण्डिमः ॥२१॥

वृथा श्रमोऽयं विदुषां वृथायं कर्मिणां श्रमः ।
यदि न ब्रह्मविज्ञानमिति वेदान्तडिण्डिमः ॥२२॥

अलं यागैरलं योगैरलं भोगैरलं धनैः ।
परस्मिन्ब्रह्मणि ज्ञात इति वेदान्तडिण्डिमः ॥२३॥

अलं वेदैरलं शास्त्रैरलं स्मृतिपुराणकैः ।
परमात्मनि विज्ञात इति वेदान्तडिण्डिमः ॥२४॥

नर्चा न यजुषार्थोऽस्ति न साम्नार्थोऽस्ति कश्चन ।
जाते ब्रह्मात्मविज्ञान इति वेदान्तडिण्डिमः ॥२५॥

कर्माणि चित्तशुद्ध्यर्थमैकाग्र्यार्थमुपासनम् ।
मोक्षार्थं ब्रह्मविज्ञानमिति वेदान्तडिण्डिमः ॥२६॥

संचितागामिकर्माणि दह्यन्ते ज्ञानकर्मणा ।
प्रारब्धानुभवान्मोक्ष इति वेदान्तडिण्डिमः ॥२७॥

न पुण्यकर्मणा वृद्धिर्न हानिः पापकर्मणा ।
नित्यासङ्गात्मनिष्ठानामिति वेदान्तडिण्डिमः ॥२८॥

दृग्दृश्यौ द्वौ पदार्थौ स्तः परस्परविलक्षणौ ।
दृग्ब्रह्म दृश्यं माया स्यादिति वेदान्तडिण्डिमः ॥२९॥

अविद्योपाधिको जीवो मायोपाधिक ईश्वरः ।
मायाविद्यागुणातीत इति वेदान्तडिण्डिमः ॥३०॥

बुद्धिपूर्वाबुद्धिपूर्वकृतानां पापकर्मणाम् ।
प्रायश्चित्तमहो ज्ञानमिति वेदान्तडिण्डिमः ॥३१॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

साकारं च निराकारं निर्गुणं च गुणात्मकम् ।
तत्त्वं तत्परमं ब्रह्म इति वेदान्तडिण्डिमः ॥३२॥

द्विजत्वं विध्यनुष्ठानाद्विप्रत्वं वेदपाठतः ।
ब्रह्मण्यं ब्रह्मविज्ञानादिति वेदान्तडिण्डिमः ॥३३॥

सर्वात्मना स्थितं ब्रह्म सर्वं ब्रह्मात्मना स्थितम् ।
न कार्यं कारणाद्भिन्नमिति वेदान्तडिण्डिमः ॥३४॥

सत्तास्फुरणसौख्यानि भासन्ते सर्ववस्तुषु ।
तस्माद्ब्रह्ममयं सर्वमिति वेदान्तडिण्डिमः ॥३५॥

अवस्थात्रितयं यस्य क्रीडाभूमितया स्थितम् ।
तदेव ब्रह्म जानीयादिति वेदान्तडिण्डिमः ॥३६॥

यन्नादौ यच्च नास्त्यन्ते तन्मध्ये भातमप्यसत् ।
अतो मिथ्या जगत्सर्वमिति वेदान्तडिण्डिमः ॥३७॥

यदस्त्यादौ यदस्त्यन्ते यन्मध्ये भाति तत्स्वयम् ।
ब्रह्मैवैकमिदं सत्यमिति वेदान्तडिण्डिमः ॥३८॥

पुरुषार्थत्रयाविष्टाः पुरुषाः पशवो ध्रुवम् ।
मोक्षार्थी पुरुषः श्रेष्ठ इति वेदान्तडिण्डिमः ॥३९॥

घटकुड्यादिकं सर्वं मृत्तिकामात्रमेव च ।
तथा ब्रह्म जगत्सर्वमिति वेदान्तडिण्डिमः ॥४०॥

षण्निहत्य त्रयं हित्वा द्वयं भित्त्वाखिलातिगम् ।
एकं बुद्ध्वाश्नुते मोक्षमिति वेदान्तडिण्डिमः ॥४१॥

भित्त्वा षट् पञ्च भित्त्वाथ भित्त्वाथ चतुरस्त्रिकम् ।
द्वयं हित्वाश्रयेदेकमिति वेदान्तडिण्डिमः ॥४२॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

देहो नाहमहं देही देहसाक्षीति निश्चयात् ।
जन्ममृत्युप्रहीणोऽसाविति वेदान्तडिण्डिमः ॥४३॥

प्राणो नाहमहं देवः प्राणसाक्षीति निश्चयात् ।
क्षुत्पिपासोपशान्तिः स्यादिति वेदान्तडिण्डिमः ॥४४॥

मनो नाहमहं देवो मनःसाक्षीति निश्चयात् ।
शोकमोहापहानिः स्यादिति वेदान्तडिण्डिमः ॥४५॥

बुद्धिर्नाहमहं देवो बुद्धिसाक्षीति निश्चयात् ।
कर्तृभावनिवृत्तिः स्यादिति वेदान्तडिण्डिमः ॥४६॥

नाज्ञानं स्यामहं देवोऽज्ञानसाक्षीति निश्चयात् ।
सर्वानर्थनिवृत्तिः स्यादिति वेदान्तडिण्डिमः ॥४७॥

अहं साक्षीति यो विद्याद्विविच्यैवं पुनः पुनः ।
स एव मुक्तोऽसौ विद्वानिति वेदान्तडिण्डिमः ॥४८॥

नाहं माया न तत्कार्यं न साक्षी परमोऽस्म्यहम् ।
इति निःसंशयज्ञानान्मुक्तिर्वेदान्तडिण्डिमः ॥४९॥

नाहं सर्वमहं सर्वं मयि सर्वमिति स्फुटम् ।
ज्ञाते तत्त्वे कुतो दुःखमिति वेदान्तडिण्डिमः ॥५०॥

देहादिपञ्चकोशस्था या सत्ता प्रतिभासते ।
सा सत्तात्मा न संदेह इति वेदान्तडिण्डिमः ॥५१॥

देहादिपञ्चकोशस्था या स्फूर्तिरनुभूयते ।
सा स्फूर्तिरात्मा नैवान्यदिति वेदान्तडिण्डिमः ॥५२॥

देहादिपञ्चकोशस्था या प्रीतिरनुभूयते ।
सा प्रीतिरात्मा कूटस्थ इति वेदान्तडिण्डिमः ॥५३॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

व्योमादिपञ्चभूतस्था या सत्ता भासते नृणाम् ।
सा सत्ता परमं ब्रह्म इति वेदान्तडिण्डिमः ॥५४॥

व्योमादिपञ्चभूतस्था या चिदेकानुभूयते ।
सा चिदेव परं ब्रह्म इति वेदान्तडिण्डिमः ॥५५॥

व्योमादिपञ्चभूतस्था या प्रीतिरनुभूयते ।
सा प्रीतिरेव ब्रह्म स्यादिति वेदान्तडिण्डिमः ॥५६॥

देहादिकोशगा सत्ता या सा व्योमादिभूतगा ।
मानाभावान्न तद्भेद इति वेदान्तडिण्डिमः ॥५७॥

देहादिकोशगा स्फूर्तिर्या सा व्योमादिभूतगा ।
मानाभावान्न तद्भेद इति वेदान्तडिण्डिमः ॥५८॥

देहादिकोशगा प्रीतिर्या सा व्योमादिभूतगा ।
मानाभावान्न तद्भेद इति वेदान्तडिण्डिमः ॥५९॥

सच्चिदानन्दरूपत्वाद्ब्रह्मैवात्मा न संशयः ।
प्रमाणकोटिसंधानादिति वेदान्तडिण्डिमः ॥६०॥

न जीवब्रह्मणोर्भेदः सत्तारूपेण विद्यते ।
सत्ताभेदे न मानं स्यादिति वेदान्तडिण्डिमः ॥६१॥

न जीवब्रह्मणोर्भेदः स्फूर्तिरूपेण विद्यते ।
स्फूर्तिभेदे न मानं स्यादिति वेदान्तडिण्डिमः ॥६२॥

न जीवब्रह्मणोर्भेदः प्रियरूपेण विद्यते ।
प्रियभेदे न मानं स्यादिति वेदान्तडिण्डिमः ॥६३॥

न जीवब्रह्मणोर्भेदो नाम्ना रूपेण विद्यते ।
नाम्नो रूपस्य मिथ्यात्वादिति वेदान्तडिण्डिमः ॥६४॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

न जीवब्रह्मणोर्भेदः पिण्डब्रह्माण्डभेदतः ।
व्यष्टेः समष्टेरेकत्वादिति वेदान्तडिण्डिमः ॥६५॥

ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः ।
जीवन्मुक्तस्तु तद्विद्वानिति वेदान्तडिण्डिमः ॥६६॥

न नामरूपे नियते सर्वज्ञ व्यभिचारतः ।
अनामरूपं सर्वं स्यादितिवेदान्तडिण्डिमः ॥६७॥

अनामरूपं सकलं सन्मयं चिन्मयं परम् ।
कुतो भेदः कुतो बन्ध इति वेदान्तडिण्डिमः ॥६८॥

न तत्त्वात्कथ्यते लोको नामाद्यैर्व्यभिचारतः ।
वटुर्जरठ इत्याद्यैरिति वेदान्तडिण्डिमः ॥६९॥

नामरूपात्मकं विश्वमिन्द्रजालं विदुर्बुधाः ।
अनामत्वादयुक्तत्वादिति वेदान्तडिण्डिमः ॥७०॥

अभेददर्शनं मोक्षः संसारो भेददर्शनम् ।
सर्ववेदान्तसिद्धान्त इति वेदान्तडिण्डिमः ॥७१॥

न मताभिनिवेशित्वान्न भाषावेशमात्रतः ।
मुक्तिर्विनात्मविज्ञानादिति वेदान्तडिण्डिमः ॥७२॥

न काम्यप्रतिषिद्धाभिः क्रियाभिर्मोक्षवासना ।
ईश्वरानुग्रहात्सा स्यादिति वेदान्तडिण्डिमः ॥७३॥

अविज्ञाते जन्म नष्टं विज्ञाते जन्म सार्थकम् ।
ज्ञातुरात्मा न दूरे स्यादिति वेदान्तडिण्डिमः ॥७४॥

दशमस्य परिज्ञाने नायासोऽस्ति यथा तथा ।
स्वस्य ब्रह्मात्मविज्ञाने इति वेदान्तडिण्डिमः ॥७५॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

उपेक्ष्योपाधिकादोषान्गृह्यन्ते विषया यथा ।
उपेक्ष्यं दृश्यं यद्ब्रह्म इति वेदान्तडिण्डिमः ॥७६॥

सुखमल्पं बहुक्लेशो विषयग्राहिणां नृणाम् ।
अनन्तं ब्रह्मनिष्ठानामिति वेदान्तडिण्डिमः ॥७७॥

धनैर्वा धनदैः पुत्रैर्दारागारसहोदरैः ।
ध्रुवं प्राणहरैर्दुःखमिति वेदान्तडिण्डिमः ॥७८॥

सुप्तेरुत्थाय सुप्त्यन्तं ब्रह्मैकं प्रविचिन्त्यताम् ।
नातिदूरे नृणां मृत्युरिति वेदान्तडिण्डिमः ॥७९॥

पञ्चानामपि कोशानां मायानर्थव्ययोचिता ।
तत्साक्षी ब्रह्मविज्ञानमिति वेदान्तडिण्डिमः ॥८०॥

दशमत्वपरिज्ञाने नवज्ञस्य यथा सुखम् ।
तथा जीवस्य सत्प्राप्ताविति वेदान्तडिण्डिमः ॥८१॥

नवभ्योऽस्ति परं प्रत्यङ् नव वेद परं परम् ।
तद्विज्ञानाद्भवेत्तुर्या मुक्तिर्वेदान्तडिण्डिमः ॥८२॥

नवाभासानवज्ञत्वान्नवोपाधीन्नवात्मना ।
मिथ्या ज्ञात्वावशिष्टे तु मौनं वेदान्तडिण्डिमः ॥८३॥

परमे ब्रह्मणि स्वस्मिन्प्रविलाप्याखिलं जगत् ।
गायन्नद्वैतमानन्दमास्ते वेदान्तडिण्डिमः ॥८४॥

प्रतिलोमानुलोमाभ्यां विश्वारोपापवादयोः ।
चिन्तने शिष्यते तत्त्वमिति वेदान्तडिण्डिमः ॥८५॥

नामरूपाभिमानः स्यात्संसारः सर्वदेहिनाम् ।
सच्चिदानन्ददृष्टिः स्यान्मुक्तिर्वेदान्तडिण्डिमः ॥८६॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सच्चिदानन्दसत्यत्वे मिथ्यात्वे नामरूपयोः ।
विज्ञाते किमिदं ज्ञेयमिति वेदान्तडिण्डिमः ॥८७॥

सालम्बनं निरालम्बं सर्वालम्बावलम्बितम् ।
आलम्बेनाखिलालम्बमिति वेदान्तडिण्डिमः ॥८८॥

न कुर्यान्न विजानीयात्सर्यं ब्रह्मेत्यनुस्मरन् ।
यथा सुखं तथा तिष्ठेदिति वेदान्तडिण्डिमः ॥८९॥

स्वकर्मपाशवशगः प्राज्ञोऽन्यो वा जनो ध्रुवम् ।
प्राज्ञः सुखं नयेत्कालमिति वेदान्तडिण्डिमः ॥९०॥

न विद्वान्संतपेच्चित्तं करणाकरणे ध्रुवम् ।
सर्वमात्मेति विज्ञानादिति वेदान्तडिण्डिमः ॥९१॥

नैवाभासं स्पृशेत्कर्म मिथ्योपाधिमपि स्वयम् ।
कुतोऽधिष्ठानमत्यच्छमिति वेदान्तडिण्डिमः ॥९२॥

अहोऽस्माकमलं मोहैरात्मा ब्रह्मेति निर्भयम् ।
श्रुतिभेरीरवोऽद्यापि श्रूयते श्रुतिरञ्जनः ॥९३॥

वेदान्तभेरीझंकारः प्रतिवादिभयंकरः ।
श्रूयतां ब्रह्मणैः श्रीमद्दक्षिणामूर्त्यनुग्रहात् ॥९४॥

॥ इति वेदान्तडिण्डिमः ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# परशम्भुमहिम्नस्तोत्रम्

श्रीशम्भो ते महिम्नः स्तुतिपथरचितास्साङ्गवेदास्सशास्त्रा-
स्सिद्धान्तास्साङ्गविद्यास्सचकितमतयोनैव पश्यन्ति पारम् ।
साद्यान्तास्त्वामनन्तं परमशिवगुरुं ते कथं वर्णयेयु-
स्तस्मात्प्रज्ञानसारादहमिति भवतस्स्तौमि किञ्चिच्चरित्रम् ॥१॥

क्वानन्दात्मप्रकाशस्तवपरमहिमा पारपीयूषसिन्धु-
स्त्वद्भक्त्यामोदमग्नाः क्वचकविमधुपास्तत्पिपासानुबद्धाः ।
श्रीशम्भो मोहजृम्भो न जनयति परं स्वात्मचर्यां किमेत-
च्चित्रं तद्वन्मयापि स्वमतिविभवतस्स्तूयते यन्नदोषः ॥२॥

श्रीमद्भिर्दृश्यभावैरहमहमहमित्यात्मसत्ताधिरूढै-
र्नानारूपैः पदार्थैर्निरवधिविभवैराशु देदीप्यमानः ।
सर्वातीतस्त्वमेकः परशिवचरणस्वप्रकाशात्म शम्भो-
नान्यस्त्वत्तः परोऽस्तीत्यहह सुगुरुणा त्वां स्वभावैरवैमि ॥३॥

आत्मवैषस्वकीयो निरतिशयचिदानन्दसद्ब्रह्मपूर्णो-
जिह्मस्संसारभावैरतिदुरधिगमैरात्तमायाविलासैः ।
सर्वात्मत्वादनन्तस्तवशिवमहसश्श्रीगुरोस्सत्यवाक्यै-
र्निस्तर्कोपाधिभेदैः परमपुरुष ते तत्त्वमद्वैतमेति ॥४॥

दीक्षां यश्शाम्भवीं सद्गुरुशिवविहिता दिव्यबीजगमोक्तां
प्राप्य श्रीशम्भु तादात्म्यवितरणचणां जन्ममृत्युप्रभेत्त्रीं ।
भित्वा भेद्यं पशुत्वं परशिवचरणध्यानयोगेनपूर्ण-
स्स्वाघोरब्रह्मविद्याविदितपरपदं ब्रह्म सप्रैति विद्वान ॥५॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

ब्रह्माण्डपिण्डमेतत्पितरमिवसुतं तत्समानैकधर्मं
विज्ञायाज्ञानमुक्तश्शिवगुरुवचनैरात्मविज्ञानशान्तः ।
सर्वात्मैकप्रभोस्ते परशिवचरणाराधनासक्तचित्तो
यः कोप्येकस्स योगी जयति जनिमृती भो महामृत्युमृत्यो ॥६॥

पिण्डे षाट्कोशिकेऽस्मिन्नवविपुरपुरे पञ्चभूतेन्द्रियाढ्ये
पुंस्त्वे स्त्रैणे च षाण्डे शिवगुरुवचनैरत्र विज्ञायसे चेत् ।
केनाप्यन्नानुचित्तं प्रमितिनिरुपमानन्दकोशात्तराशि-
स्त्वंषोढाभिन्नमूर्तिः परशिवसवुधो विश्वरूपत्वमीयात् ॥७॥

सर्वेश श्री पुरेश त्रिभुवनविदितव्यक्तयश्शक्तयस्ते
नानावेद्याः पराद्यानिरवधिविभवा मातृकान्तास्सक्रान्ताः ।
विज्ञातास्स्युस्स्वरूपे यदि शिवगुरुणा विश्वदृश्यप्रपञ्च-
स्स्वात्मज्योतिर्विलीनं विदधति विदुषो योगिनस्यैव मुक्तिः ॥८॥

या षोढा पञ्चधा च प्रकटितविभवा श्रीपरादेव शम्भोः
सैव श्रीसुन्दरीतिश्रुतिभिरभिहिताचक्रराजासनस्था ।
सर्वत्रानेककोटिप्रकटितगणनायोगिभिर्व्यंश्नुवाना
त्वत्तेजोऽन्तर्निरूढा रचयति जगतामादिमध्यान्तकालान् ॥९॥

या शक्तिः पञ्चवाहप्रवहणलहरी व्यक्तनैजात्मतेज-
स्संवर्ताग्निप्रपीतत्रिभुवनजलधिः कालसंकर्षणी ते ।
दिक्कालातीतमूर्ते परशिवमहतां भक्तिभाजामविद्यां
मृत्युं विज्ञानदानात्प्रहरति विदुषां तन्महत्वं त्वमेव ॥१०॥

सर्वज्ञो नित्यतृप्तस्सदसदुभयगानादिबोधस्वतन्त्रो
नित्यालुप्तात्मशक्तिर्निरुपमचरितोऽनन्त इत्यङ्गषट्कैः ।
एवं षट्छक्तिभावस्त्वमिह यदि शिवज्ञायसे देशिकोक्त्या
येन स्वात्मन्यनादौ सकलविलसितं ते परायास्सवेदाः ॥११॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

गायत्री वेदगात्री शतमखफलदादेदशास्त्रैदवेद्या
चिच्छक्तिर्ब्रह्मविद्यां परमशिवतव श्रीवरां व्याकरोति ।
शब्दब्रह्मैक्यवाच्यामखिलमतमितिव्यक्ततत्त्वामवाच्यां
सप्तस्रोतो विभूतिं त्रिभुवनमथतां तत्त्वतस्सर्वतुर्याम् ॥१२॥

संसारासारभावप्रहरणचतुरामादिशक्तिं परां तां
स्वात्मा भिन्नां विदित्वा वपुरनुमतिभिर्नावृताहं कृतस्थः ।
त्रैलोक्यं ब्रह्म विश्वप्रसरमनवधिस्वप्रकाशप्रपूर्णं
ज्ञात्वा मुक्तस्सयोगी भवति गत भवस्त्वत्प्रकाशान्महेश ॥१३॥

विश्वेश स्वप्रकाशप्रचुरमिह विना नान्यदस्तीति तत्त्वं
मीमांसारूपमेतत्तव परमगुरो श्रीमुखाम्नायजालम् ।
स्वप्रत्यक्षं विहाय स्वरहितमिति चेदस्ति चान्यत्र तत्त्वं
यो धीरास्तर्कयेयुस्त इहजनिमृती नाप्नुवन्त्यङ्गभागैः ॥१४॥

नब्रह्माविष्णुरुद्रौ सुरपतिरमरा नासुरा नैवपृथ्वी
नापो नाग्निर्नवायुर्नच गगनतलं नो दिशो नैव कालः ।
नो वेदा नैव यज्ञानचरविशशिनौ नोवियन्नोविकल्प-
स्स्वज्योतिस्सत्यमेकं जयति तवपदं सच्चिदानन्दमूर्ते ॥१५॥

शम्भो सैद्धान्तिकाये स्वमतिविभवतो खर्वगर्वाप्रमाणै-
र्मीमांसं ते भवन्तं बहुमतजनकैरावृता शुद्धविद्यैः ।
अन्योन्यस्पर्धिनस्ते कथमिह भवतस्तत्त्वमीयुस्स्वतेज-
स्सर्वातीतं विकल्पग्रहरहितमजं मानतर्काद्यगम्यम् ॥१६॥

धीरा केचिन्महान्तो गुरुवचनरता स्त्यक्तसंसारभावा
निश्शङ्का घोरविद्यापरिणतमतयस्सर्वसङ्कल्पमुक्ताः ।
त्वत्कारुण्याक्षिलक्ष्याः परमशिवभवत्साधकाः पुण्यपापैः
कृत्यैरेभिर्विहीनाः परपदविभवं त्वां प्रपश्यन्ति विश्वम् ॥१७॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सिद्धान्तश्शाम्भवोऽयं शिवगुरुवचनाघोरविद्याक्षरोक्त-
स्तोत्रव्याजेन निर्वाह्यत इति भवतश्श्री विभो चापलं मे ।
अत्र न्यूनातिरेकोक्ति जनितमसकृत् क्षम्यतां दासबुद्ध्या
मच्चित्तस्थप्रमेयं समुपदिशपरं मातृकावर्णराशौ ॥१८॥

इति श्रीपरशम्भुमहिम्नि उपोद्धातप्रकरणं प्रथमम् ॥

श्रीमद्रश्मिप्रभावं त्रिभुवनभवनव्यञ्जकं स्वात्मदीपं
कोवावक्तुं निरुक्त्या प्रभवति यतधीरात्तसम्यग्विमर्शः ।
यत्र ब्रह्मादिविद्वन्मतिरपि विगतिर्यातिभीत्या विनाशं
श्रुत्यासार्थं स केनप्रविततमतिनावर्णिते ते महेश ॥१९॥

षण्णामप्यस्वयानां क्षितिजलदहनस्पर्शनाकाशचेतः
पीठस्थानां पराद्याः परशिवभवतश्शक्तयो मातृकान्ताः ।
ब्रह्मादिप्रेतसिंहासनगतविभवैस्तावकीयैष्षडङ्गै-
र्द्वात्रिंशद्रश्मिमुख्यस्वकिरणव्याप्तविश्वैर्विभान्ति ॥२०॥

बुद्धेस्सम्यग्विमर्शप्रकटिततरणेरर्थवद्वाक्प्रवृत्ते-
र्यंत्रस्थाने तुरीये नवकलितमहावाक्यतत्त्वे विनाशः ।
तत्किंज्योतिस्तमोपासदसदुभयगं किन्न्वमूर्तंन्नुमूर्तं
नध्याष्यश्चेद्विनाशो नहि मतिवचसां देव तस्मात्परत्वम् ॥२१॥

ज्ञानं योगःप्रकाशो विधिरुभयमतिर्देहधीप्राणशून्या-
हङ्कारश्चाधिकामस्स्वविषयमनघं चाश्रयन्नन्तरास्ते ।
इत्यात्माकाशसक्ता तवपरविदिता सम्यगेतत्प्रमेया-
धारेष्वन्तर्घृतं यत्पयसि तिलचये तैलपङ्क्वासिहीश ॥२२॥

षट्त्रिंशत्तत्त्वपुष्पस्तवकपरिमलस्तावकीय स्वतेजः
कल्पद्रुश्चेत्प्रबुद्धशिवगुरुवचसा सर्वतस्स्वानुभूतिः ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अद्वैतब्रह्मबुद्धिं जनयति विदुषामेष एवासदादि-
ब्रह्मान्तात्मप्रपञ्चे विलसति नपरोऽस्तीति चेत्पारिजातः ॥२३॥

स्वप्रत्यक्षेऽपि तत्त्वे करतलफलवद्वेत्ति नासौ स्वरूपं
नानासिद्धान्तजालप्रलपितजनिताज्ञानमोहान्धकारैः ।
आक्रान्ते पुण्यपापैरधिगतनिधनैरात्मकर्मण्यनादौ
हेयोपादेयबुद्धया भव इति विदितस्ते महामाययेश ॥२४॥

एकोऽसौ लक्षितैश्चेदखिलतनुगतैरिन्द्रियार्थैरनेकै-
र्भिन्नस्स्वात्मप्रकृत्या विधिजनिमृतिभिस्सन्निबद्धः किमेतत् ।
देवत्वं मानुषत्वं वपुषि भुजगतां सर्वजीवात्मकत्वं
धत्से शैलूषवत्तैः स्मरहरणपरं श्रीमहादेवमूर्ते ॥२५॥

इति श्रीपरशम्भुमहिम्ने पराशक्तिस्कन्धरश्मिप्रकरणं द्वितीयम् ॥

सत्त्वं चित्त्वं महत्त्वं तव परमगुरोरात्मशक्तेः परायाः
पिण्डीकृत्यप्रकृत्या प्रथमरतिपतिव्याजकालान्तवह्निः ।
भूत्वा संसारसृष्टिस्थितिलयनिलयाद्यातितोयार्णवान्त-
स्तन्वानोनिर्ममेच्छस्त्वमिहविजयसे विष्णुमायाविभूते ॥२६॥

मायायामन्तरस्थः कुसुमशररसस्तावकीयः स्वकाले
ज्ञानज्ञेयप्रमातृप्रकटितमहिमा स्वप्ररोहप्रसारैः ।
उत्पाद्याद्यं विरिञ्चं तदनुभुवनतामात्मनाव्यश्नुवानो
वीजाकारस्स्वयंभूरिति कथयति ते नामविश्वात्मसृष्टेः ॥२७॥

आदिक्षान्तार्णसृष्टिं त्रिभुवनभवनाभासभूमिं शिवादि-
क्षित्यन्तात्मीयतत्त्वावलि विकृतगतिं चैधसां डान्तभूमिम् ।
आत्मीयानुत्तरेच्छागुणपरिवशतां प्राप्य संव्यश्नुवानः
श्रीशम्भो विश्वसृष्टिर्भवसि निजमलत्रय्युपप्रोषितात्मा ॥२८॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

चत्वारः कालतत्त्वे तव युगपतयस्ते च धातुश्च पुत्रा
व्याख्याता द्वादशेति स्थितिकृतिविदितासावतारास्सदाराः ।
श्रीकण्ठाद्याश्च नाथाधृतयुगविधयस्त्वन्नियत्युत्थितान्ता-
श्चैतन्यापीव तस्मात् स्थितिरितिविदितस्ते सहस्रार्कदीपैः ॥२९॥

आत्मीयानादिरश्मीनिह तव विजितानेकसिद्धान्तजाल-
व्यापारोद्यद्विकल्पानृतमुखविषयान् पुण्यपापादिभेदैः ।
दुर्ज्ञेयां देशिकोक्त्या प्रविततविमलस्वप्रकाशैकवह्नौ
साक्षात्तत्त्वे न वुद्धान् झटिति विजयते यस्त्वदात्मा विरोधः ॥३०॥

जाग्रत्स्वप्नप्रसुप्तिप्रकटितविभवैरात्ममायागुणैः स्वै-
र्ज्ञानेच्छाक्रोधरूपैर्विविधहरणकैरावृते मोक्षमार्गे ।
पान्थाः केचित्सुधीराश्शिवगुरुवदनज्ञानशास्त्रैकदीक्षा-
स्त्वत्कारुण्यैकरक्षा परिविहृतभियस्त्वां प्रयान्त्यादिमूर्ते ॥३१॥

त्वं मायाकामदेवप्रथममसि भवत्स्व स्वसृष्टा विधाता
रक्षायां विष्णुरन्ते प्रबलतरमहारुद्रमूर्तिस्त्वमूर्तौ ।
सत्योऽनन्तः प्रमाता शिवगुरुरिति च स्वात्मभूतिप्रभावै-
स्स्वेच्छावस्थागुणाढ्योप्यगुणतव विभो वस्तुतस्स्तूयसे त्वम् ॥३२॥

इच्छा शक्त्या यया तत्कवलितमखिलं ते जगज्जालरूपं
सृष्टिस्थित्यन्तवृत्ता सरसिजलधरासारतुल्यात्मगत्या ।
सैवानन्तान्तरङ्गान् सरसबहुविधानेकसङ्कल्पभावै-
राविर्भूत्वा त्वदङ्गप्रकटनकृतये बोधसिन्धुस्त्वमेव ॥३३॥

इति श्री परशम्भुमहिम्नि इच्छाशक्तिस्कन्धरश्मिप्रकरणं तृतीयम् ॥

संवेद्यं तत्त्वजालं परशिवधरणीं मूलपारं विचित्रं
कर्मानन्तप्रपञ्चं निरुपममहिमानादिमध्यावसानः ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

ब्रह्मानन्दामृताब्धिस्समरसविधुना जृम्भितस्स्वात्मभासो
हेतुत्वेन प्रबोधज्वलनतवमहाज्ञानशक्तिं व्यनक्ति ॥३४॥

गोजं क्षीरं यथैकं द्युतिविविधगुणस्वेन्द्रियार्थप्रकाशो
ऽप्येकस्तद्वर्णनानारुचिरधिकरणस्यैकताकारणेन ।
नीलाद्याभासबुद्ध्या नच परिहसतो धूमघानैरिवाग्निः
प्राचुर्येण प्रदीप्तः परमशिव ततस्सत्य विश्वात्मकस्त्वम् ॥३५॥

नित्याखण्डप्रकाशादमलतरविभो स्त्वत्सकाशात्कदाचि-
न्मायासञ्जायमाना त्रिगुणमुखगणैस्त्यक्तशक्तिस्वभावा ।
सिद्धान्तैर्भिन्नमानप्रमितिभिरसुखैर्भेदबुद्धिप्रधानै-
संसारित्वं प्रसार्यं दृढय विभवतो सत्यतां वेदविद्या ॥३६॥

अन्यः पक्षोऽथवात्र प्रविमलकलनानन्तशक्तिप्रकाश-
स्सत्याख्यस्सोऽपि यत्र प्रविलयमयते शून्यगर्ते तदात्मा ।
ग्रीष्माकासत्यभावस्सचनिजमहसां कामरूपात्ममाया
मुत्पाद्यैतत्प्रपञ्चं घटयति तदिदं व्यश्नुषे स्वात्मयोने ॥३७॥

ऐक्याच्चिच्छक्तियोश्चेदिदमहमितिच द्वन्द्वभावस्य जीव-
ब्रह्मादिद्वैतबुध्योर्दिनकरशशिनोरण्डविध्यण्डयोश्च ।
प्राणापानाख्यवाय्वोस्सुकृतदुरितयोस्त्याद्यदा सामरस्य
प्रादुर्भावस्तदा त्वं भवसि सदसदानन्दनाथः परागने ॥३८॥

सेयं विज्ञानशक्तिस्तव शिवगुरुणा दर्शिता नित्यशुद्धा
निर्द्वन्द्वब्रह्मतत्त्वं गमयति सुधियां सच्चिदानन्दपूर्णम् ।
लोकेमेय प्रमातृप्रमितिभिरितिचेदर्चिता भिन्नमार्गा
मुद्रा नानास्वरूपाः प्रकटयति मुधाहं कृतिस्थाः परेशः ॥३९॥

इति श्रीपरशम्भुमहिम्नि ज्ञानशक्तिस्कन्धरश्मिप्रकरणं चतुर्थं ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

बुद्धिज्ञानेन्द्रियाणां निजनिजविषयास्वादभोगप्रबोध
क्षीराब्धिः प्रोद्यदिच्छामृतकिरणरुचा वाङ्मुखक्षालितैश्च।
संक्रान्तश्चालितार्थप्रसरबहुतया स्वात्ममायोरुपूर-
त्रुट्यद्ब्रह्माण्डबिन्दून् विकिरतिननुचेद्वं शिवातः क्रियात्मा ।४०।

सृष्टिस्थित्यन्तलीलावकलितसरणिर्यत्प्रयत्नो यदीयं
धैर्यं विख्यातवीर्यं सकलमितिगता यस्य बुद्धिस्समृद्धा।
यत्सामर्थ्यं प्रभूतं निरवधिगणनाजाण्डरुद्राण्डभाण्डा-
गारं यद्ब्रह्मसत्ता जयति तव मनोरूपविश्वात्मतत्त्वम् ॥४१॥

संवेशं दूरदेशं कलयति सकलं कर्मकृत्यं च तत्त्वं
स्वं यद्बाह्येन्द्रियाणां कलनमपि विना स्वान्तमन्तःप्रकाशम्।
तत्ते वीरस्वतन्त्रप्रकृतिनिगमनं निर्गतोपाधितर्कं
बाह्याक्षणां दर्शनार्थं विमलशिवततस्त्वं हृषीकाश्रयात्मा ॥४२॥

यद्वन्न्यग्रोधबीजं पृथुतरविटपानोकहत्वेन रूढं
सामर्थ्यं दर्शयेत्स्वं परमशिव सदा सत्यविज्ञानबीजम्।
इच्छाक्षेत्रासुबुद्धीन्द्रियकुलकलितं सर्वं तत्त्वं क्रियाभि-
स्त्वात्मानं विश्वरूपं प्रकटयसि यदा त्वं तदा गोचरस्स्याः ॥४३॥

स्वात्माशेषाक्षवृत्तेः पृथगयनतया क्वापि भूतानि पञ्च
क्वापि प्रेक्षाप्रपञ्चः क्वचनिनदमुखाः क्वापि वाक्यादयश्च।
एतैरेव प्रवृत्तो निजविषयतया सर्वविश्वात्मजृम्भ-
स्तस्मात्त्वं लोकमुख्योद्यमिति रहितस्स्वप्रकाशप्रमेयः ॥४४॥

कालावस्थाश्चतस्रो गिरिश दशदिशस्सप्तधा भूमिरापो
नानातेजस्समीरा दशवियदखिलव्यापि चैकादशाक्षी।
भिन्नार्थानन्तबोधप्रकटितमहिमा बीजभेदास्त्वनन्ता-
स्तत्सत्ता बीजजातात्स्वगुणमनुसरन्त्येव ते देवसत्त्वात् ॥४५॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

पञ्चाशद्वर्णमाला बहुविधनिनदोच्चारणातत्त्वजाल-
व्यक्तिव्यापारसक्ता गिरिशगुरुमुखाम्नायविद्यास्वरूपा ।
धात्राद्युत्पत्तिपूर्वश्रुतिमुखविविधानन्तसिद्धान्तविद्या
नानाभाषाः क्रियाभिः प्रकटयति ततस्सैव ते साङ्गवेदान् ॥४६॥

वर्णेभ्यो धातवस्स्युर्विविधपदचयस्तद्भवस्तेनवाक्यं
तस्माज्जातं प्रमाणं विविधनिगमनं तेन सिद्धान्तजालम् ।
तस्मान्नानात्मतत्त्वप्रकटनमिति यत्तत्त्वविद्या त्वदीया
त्वंचेदेकोऽद्वितीयः क्रमरहित महासंविदात्मा महेश ॥४७॥

यज्ञस्थानं श्मशानं सकलमिति गृहं भास्वदोङ्कारपीठं
प्रादुर्भूतप्रयागस्थलमतिविपुलं कल्पवृक्षाधिरूढैः ।
संवीरं भैरवश्चोरगपतिगणपैस्तत्रदिव्यार्घ्यपात्रं
वह्निर्वध्नेन्दुक्लृप्तं परशिवसकलं नश्नुषेऽध्यात्मयोने ॥४८॥

चित्पूजादृक्क्रियात्मागुरुकथितमहारुद्रमूर्तिस्समन्ता-
दात्मीयैः रश्मिदेवैरधिगतविषयाज्याहुतिर्निर्विकल्पः ।
निष्कामैरात्मकामैरुपचितयजनश्चित्स्वतन्त्रैरतन्त्रै-
रात्माग्नौ ब्रह्मविद्यापरिणतमतिभिर्योगिभिर्हूयसे त्वम् ॥४९॥

द्वैतं यत्रानघेदं पशुरधिपिशितो मृत्युरक्षाणि जिह्वा
हव्यं वाथप्रबोधः प्रकटहुतवहो निर्मलात्मैव होता ।
अध्वर्युस्स्वच्छचेतो गुरुमुखविदितामात्रकोद्गात्रवर्ग-
स्स्वाचार्यो देशिकेन्द्रः परमखभुगसि त्वं परश्शम्भुरीशः ॥५०॥

यागाश्चान्ये सकामैः पशुभिरिह कृताः सर्वसिद्धान्तकृत्या
नानायज्ञक्रियाश्च त्रिभुवनभुवने चित्रकर्मप्रसाराः ।
विश्वोत्पत्ति प्रतिष्ठा प्रहरणविधयस्त्वत्क्रियाशक्तिबीजा-
त्संजाताः सर्वतस्त्वं प्रभवसि मनसा चित्रनिर्माणमूर्तिः ॥५१॥

॥ इति श्रीपरशम्भुमहिम्नि क्रियाशक्तिस्कन्धरश्मिप्रकरणं पञ्चमम् ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

नित्यालुप्तात्मशक्तिः सकलतिथिफणा पञ्चदश्याप्रदीप्त-
स्त्रुटयादीन्कालवायून् ग्रसदुरुरसपश्चक्रवल्मीकवर्ती ।
सम्यक्चैतन्यगुम्भैरवगतकिरणो विश्वजम्भैकभर्ता-
कृष्णाध्वार्केन्दुयोनिर्भुजगपतितनुस्त्वं ततः कुण्डलीशः ॥५२॥

स्वस्थात्मा चित्तपूर्वं रविशशिपदवीपूरितांशुप्रचारां
दीप्तान्तर्वह्निवेदैः रविततगतिभिर्बोधिताधारशक्तिम् ।
तत्तच्चक्रप्रभेदोद्भवविविधमहाशब्दरूपामनन्तां
ब्रह्मानन्दप्रवाहामनुभवसि परामादिसौषुम्नमूर्ते ॥५३॥

यस्मात्प्राणः प्ररोहत्युपरिगतिरधः संप्रभावत्यपान-
स्तस्मादेवाविरोधात्तदुभयजनिकृद्वायुसंरोधमात्रात् ।
विद्या विद्यादियुग्मप्रसरसमरसाम्भोधिजृम्भैरदम्भैः
सार्थं हंसः परस्मिन्महसि खलु लयं प्रैति ते प्राणसूत्रः ॥५४॥

सर्वेषामिन्द्रियाणां निजनिजविषयोद्योतनं यत्प्रसूतं
सारास्सर्वेषु कर्मस्वनुपमविषयाः साध्वसानन्दिकोपाः ।
या जातास्सर्वनाडीपथचलदनिलव्याप्तयस्सर्वभावा
नानारूपाश्च सर्वायनपथिकमहास्पन्दकः सत्त्वमेव ॥५५॥

बुध्वा सद्देशिकोक्त्या सुविधतविधवां खेचरीं दिव्यमुद्रा-
मर्धानन्तप्रपञ्चान्वितनिजकरणान्यात्मचित्ते निरुध्य ।
तच्चित्तं ज्योतिरिङ्गन्निरवधिकरणं चिन्तयेद्यस्स योगी
निर्वाणः कृष्णवर्त्मा भवति तव महा स्पन्दतामेत्य शम्भो ॥५६॥

प्राणाख्या कुण्डलिन्या जगदिदमखिलं प्राणितं ते ययेश
ज्ञात्वा यां योगिनस्ते परतरविभवं यान्ति शान्तं पदं तत् ।
यामज्ञात्वा भवाब्धौ जननमरणकृत्क्रूरकर्मप्रबद्धा
मज्जन्त्याद्यन्तहीना यदि कृपयति सामोचयेन्मृत्युबन्धात् ॥५७॥

इति श्रीपरशम्भुमहिम्नि कुण्डलिनीशक्तिस्कन्धरश्मिप्रकरणं षष्ठम् ॥



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

आज्ञातं व्रह्मतत्त्वं निजहृदयदरीलीनमात्रप्रकाशं
व्यक्ती कर्तुं स्वनित्याक्षरविदितमहामातृकात्वं प्रपन्नः।
त्वं दिव्याम्नायविद्या सुविदितमहिमानन्तशक्तिप्रकाश-
स्तत्तद्वर्णात्मभेदैरुपदिसि परं श्रीगुरो स्वस्वरूपम् ॥५८॥

श्रीशब्दव्रह्ममूर्ते सकलरवमयानाहतध्वानभेदा-
नात्मीयानक्षरस्थान्वहुविधनिनदैर्भूरिवाद्यप्रभेदैः ।
भेरीनिस्साणघण्टादरमुरजमहाशृङ्गनालोरुताले-
र्वंशैर्यन्त्रैश्चगात्रैर्जलधरपटलैस्त्वं व्रवीषि ध्वनिज्ञः ॥५९॥

तत्त्वानां व्यक्तिहेतुः सकलतिथिगतस्सप्तपुर्यष्टकाङ्ग-
स्त्रीपुंसद्वन्द्वरूपद्युमणिशशिमहावह्निपादष्षडात्मा ।
सर्वाभिप्रायसंवित्प्रकटितविभवस्त्वं महाम्नायविद्या-
सारस्फारस्वरूपः पुरुष इति ततः स्वाक्षरात्मादिवर्णः ॥६०॥

रम्योदात्तानुदात्तः स्वरितविकृतिगः स्वोच्चनीचोभयस्थो
भेदादष्टादशात्मामहितनिजमहास्फूर्तिरेकोक्षरादिः ।
षड्जादिग्रामजातश्रुतिविततलसद्गीतसप्तस्वरोच्चा-
न्नानारागान् प्रबन्धानधिवसति भवानादिनित्यस्वरात्मन् ॥६१॥

सर्वास्यस्थानवर्णः प्रथमविगणिकस्त्वं स्तुतष्षोडशीति
स्वेच्छाशक्त्यानिरूढद्रढिमनिजमहाप्रौढिमाढौकमानः ।
कालव्यक्तिस्त्रिलिंगास्त्रिजगतिनिलयान् ह्रस्वदीर्घप्लुतादीन्
विद्याऽविद्योभयात्मा जनयसि परितश्श्रीमहावर्णजात्मन् ॥६२॥

पक्षद्वन्द्वैककर्ताऽवनिजलहुतभुङ्मारुताकाशमूर्तिः
श्रोत्राद्यक्षाणि सर्वाण्यधिगतचरणस्स्वप्रकृत्या निवद्धः ।
अन्तस्थो विश्वरूपः पुरुष इति यतो ज्ञायसे स्वक्रमेण
ज्ञात्वा वर्गाक्षराणां परमशिवजनैस्स्वंततो वर्गजोसि ॥६३॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

सर्वातीतात्मधामानलनिलयपदज्ञापिकामन्त्रविद्या-
सत्यात्मप्रायबुद्धादिशिवगुरुवदनांभोरुहाद्भासमानाः ।
नानार्थाधातवश्च प्रकटितविभवाश्चित्रवाक् ब्रह्मभेदे-
स्सार्थं नस्युर्विना त्वां परशिवसहजं वर्णयोगस्वरूपम् ॥६४॥

ॐकारं स्वात्मवासं श्रुतिभिरभिनुतं वाग्भवं शक्तिबीजं
मावीजं स्मारबीजं परतरविभवं मातृकाबीजयुग्मम् ।
यावान् पञ्चापि गत्वा षडधनविलसत्कूटषट्कं च भित्वा
हंसस्सोऽहं तथा त्वं विवरसि मनसामन्तरे मन्त्रपूर्ते ॥६५॥

बिन्द्वर्धेन्दुध्वनिस्थैरवकलितकलाव्याप्तिभिस्साधिदेवै-
र्नानानन्ताधिदेवैः परिणतिसुलभैश्श्रीगुरूक्तागमस्थैः ।
न्यासैर्विद्याविशेषैः श्रुतिमुखविविधानेकसिद्धान्तमन्त्रै-
र्विष्वक्प्रोतप्रतीतो महसि भवमघं दुष्प्रभामन्त्रवर्णैः ॥६६॥

वर्णास्ते मन्त्रविद्यादशविकरणगाधातवो नित्यशब्दा-
वाक्यान्नाम्नायभेदाबहुविधमतजास्साङ्गवेदाश्च भाषाः ।
नानाछन्दांसि तालास्स्वरविकृतिगणास्सर्वतो वाङ्मयस्था
नानारूपाः पराग्नेस्समजनिषतते मातृकाशक्तिबीजात् ॥६७॥

इति श्रीपरशम्भुमहिम्नि मातृकाशक्तिस्कन्धरश्मिप्रकरणं सप्तमम् ॥

एवंरात्रि दिवस्थाः परशिवघटिका एव ते रश्मिभूता-
स्स्त्रीपुंसद्वन्द्वरूपा रविशशिचरणाक्रांतयो रक्तशुक्लाः ।
षट्छत्र्यंशप्रभेदाद्दहरपुरयुगे कोणषट्कान्तरस्थाः
कालावस्थाश्चतुर्भिः प्रविदधति युगैर्विश्वभूतेर्निदानैः ॥६८॥

षट्त्रिंशत्तत्वमालामवनिमुखशिवां तामपेतात्मकृत्यां
खे वायौ सप्तविंशत्युडुगणविकृतिर्जीवमायाशिवांशात् ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तेजस्यस्वन्तरात्मान्तरतनुविकृतेरस्थिमांसप्रमुख्याः
क्षोण्यां त्वं जीवमायागुणगणमभितो भासयस्यंशुमालिन् ॥६९॥

यावन्तस्ते मयूखाः क्षितिजलदहनस्पर्शनाकाशचेतः
पीठस्थाष्षट्प्रमाणाः परमधिपतयो भैरवा एव सर्वे ।
तेषां मध्ये त्वमेकः परतरमहिमोज्जृम्भमाणः प्रचण्डो
मार्तण्डो रश्मिमध्यस्थित इव परतो भासि चिद्भैरवाग्ने ॥७०॥

भैरव्यो रश्मिदेव्य स्तवशिवकरुणापूरिताक्ष्यः प्रसन्ना-
स्त्वत्सत्ताकाशवाहोदित ऋजुगतयश्चविंतात्मार्थकृत्याः ।
तद्धामन्येव शान्तास्सुरमुनिपितृभिः पुण्यपापैश्च बद्धान्
भक्तांश्चानेकबन्धान् झडिति विघटयंत्यात्मबोधानुजृम्भैः ॥७१॥

श्रीनाथश्रीशसर्वेश्वरपरशिवते दिव्यदिव्यामरीचि
ब्रह्मादीनां मनोवागनवगतमहाचित्रनानार्थगाढाः ।
गूढप्रौढप्रकाशास्सुरमुनिवनैरप्यबुद्धाः कथं वा
स्तोतुं ज्ञातुं समर्थो भवति कविजनः कोत्र मन्दो नृमात्रः ॥७२॥

॥इति श्रीपरशम्भुमहिम्नि साधारण्येन षडन्वयसमष्टिस्कन्धरश्मि-
विवेकप्रकरणमष्टमम् ॥

साङ्गाभूमिश्शताङ्गश्शतघृतिरपितत्सारथिस्सप्तयस्ते
वेदाब्रह्मैकवेद्याः पृथुतरचरणौ पुष्पवन्तौ तदक्षः ।
मेरुस्तत्कीलबन्धः कमठपतिरिभास्तत्पृथुस्तम्भपङ्क्ति-
श्शेषस्तद्रज्जुबन्धस्तदुपरिपितृभूस्तत्र चिन्त्यारथित्वम् ॥७३॥

कल्पांतानन्तसूर्यद्युतिमतिविकटानेकदंष्ट्रं षडास्यं
वह्नीन्द्वर्काम्बुकाष्ठादशयुतमभितः प्रज्वलन्तं मयूखैः ।
शूलासीषुप्रशक्त्यंकुशवरनृशिरः श्रीफलेष्वासवारि-
ह्येतत्पाशाभयाङ्कैर्निजभुजपरिघैस्त्वां गुरुश्शम्भुमीडे ॥७४॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

न्यस्थिर्युद्रुप्रसूनस्रगगणितमहाभूषणैः कुण्डलीन्द्रै-
राक्रोशन्मुण्डमालापरिवृतवपुषादिक्षुजाज्वल्यमानम् ।
मत्तेभेन्द्रोरुकृत्यम्बरघटितजटीमण्डलं साट्टहासं
तं भास्वद्धेमगर्भोदरविधृतकरांगुष्ठमीशं प्रपद्ये ॥७५॥

नागेन्द्रैः कल्पवृक्षैरधिगतविहगैर्भैरवैर्देवदैत्यै-
र्भूतैः प्रेतैः पिशाचैः परिवृतमभितो योगिनीभिः श्मशाने ।
सर्वप्रज्ञैकवासं त्रिभुवननिलयस्वात्मनाध्यात्मदीप्तं
सर्वोत्तीर्णात्मतत्त्वेश्वरमनलमुखं त्वां गुरुं शम्भुमीडे ॥७६॥

नानाध्वानात्मयोगप्रकटितशिवतद्धर्मरूपप्रसादा-
त्स्वेच्छाज्ञानक्रियात्मत्रिशिखविदलितत्रैयुंदीर्णप्रमोहः ।
सत्यज्ञानासिभिन्नप्रमितजनिरिपुस्वात्मयोगेषु धारा-
च्छिन्नाविद्यासुलक्ष्यः परमशिवविभो तेन मृत्युं जयस्त्वम् ॥७७॥

देवब्रह्माण्डसृष्टिस्थितिलयसमयध्वंसिनी तेऽत्रशक्ति-
र्मायाशक्ति प्रचण्डोद्धतघनकरिणी वारिणी सा प्रणीस्ते ।
धर्मार्थात्मेष्टमुक्तिप्रवितरणचणस्ते वरस्तेप्यभीति-
र्विश्वग्रासाग्रमृत्युप्रतिभयदलिनीतद्ध्रुवामृत्युमृत्युः ॥७८॥

पाशस्ते विश्ववश्यः पितृपतिकृतभी हस्तिनी सिंहवृत्ति-
श्चक्रस्संसाररात्रिद्युमणिनमुदयस्तावकस्ते पिनाकः ।
आक्रान्ताशेषमोहप्रकृतिविकृतिहामातृकाचित्परात्मा
त्राणं ते तत्कपालं हृतविधिमुखसत्प्रेत चिद्रूपमीश ॥७९॥

एवं ते दिव्यदिव्यायुधपरमहिमा गीयते वेदशास्त्रैः
प्रागुक्तस्ते शतांगोप्यपिच पितृगणप्रेतशीर्षोच्चरङ्गे ।
उच्चण्डं ताण्डवं ते त्रिभुवनभयकृद्वज्रपाताट्टहासो
भीषास्मात्वत्सकाशादपरवपरोवास्ति ते नोग्रवीरः ॥८०॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

चित्ताकाशानिलाग्न्यम्ब्ववनितरपतिप्रेतसिंहासनस्थ-
ष्षट्छक्तिव्यक्तमूर्तिष्षडयनपथिकस्सोमसूर्याग्निपातः ।
ब्रह्माग्नीस्सप्तजिह्वाकवलितविषयीभूतविश्वप्रपञ्च-
स्थूलोपि ध्यानदृष्टेस्त्वमभयतमसां ज्योतिषामप्यगम्यः ॥८१॥

इत्युक्तध्यानचिन्त्योप्यनवगतमनोवाक्प्रवृत्तिस्स्वभाव-
स्स्वच्छन्दात्मीयकर्ता चिदुचितविभवः पावकश्शम्भुरीशः ।
सर्वातीतस्वभावोऽप्युपनिषदुदितज्ञानमीमांस्यमान-
स्सत्त्वं यस्यान्तरङ्गे निवससि स शिवस्त्वन्मयस्यान्महेशः ॥८२॥

श्रीमानव्याद्धिभिक्षुस्त्रिभुवनजनकोऽध्यात्मभूरागमोक्ति
व्याख्यावेद्योप्यवाच्यः प्रकृतिसुविमलोप्यात्ममायाविलासः ।
तत्वादेकोप्यनेकः परयुवतिरतोप्यात्मवित्सेव्यमान-
स्तस्मात् स्वच्छन्दलीलास्त्वमिह विजयसे मानसीभाववृत्तम् ॥८३॥

इति श्रीपरशम्भुमहिम्नि परशम्भुपावकध्यानयोगप्रकरणं नवमम् ॥

द्रष्टव्यस्त्वं जगाद्भिर्बहुविधविधिभिस्सर्वसिद्धान्तवाक्यै-
श्श्रोतव्यो निर्विकल्पश्शिवगुरुवदनाम्भोरुहेण प्रबुद्धः ।
मन्तव्यस्सर्वतत्त्वावकलितचरणस्सन्निर्दिध्यासितव्य-
स्सत्तामात्रावलंबीत्यमरनुतपदो नास्ति देवस्त्वदन्यः ॥८४॥

उग्रं शान्तं च वीरं सकलमयमहाविष्णुमग्निं ज्वलन्तं
सर्वत्रानन्तवक्त्रं सहमृगवपुषं भीषणं सर्वभद्रम् ।
सर्वज्ञं मृत्युमृत्युं बहुविधनुतिभिर्वन्दितं सर्वलोकै-
र्विश्वाहङ्कारजृम्भं परमशिवगुरुं त्वां भजे मन्त्रराजम् ॥८५॥

शम्भो त्वां भूर्भुवस्स्वर्महरुदिततमं क्ष्वन्तरिक्षद्युसूर्या-
ज्ञाचार्येन्दुशुक्रार्चिभिरपि निगमब्रह्मभिः प्रोतशक्ति ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

प्राणापानादिभेदैः कलयति सकलं मानसं ध्यानयोगं
येषां तेषां सपर्या भवति सुरकृता ब्रह्मते जानते च ॥८६॥

सर्वोत्कृष्टं परं तत्सवितुरनुपमं ते वरेण्यं शरण्यं
भर्गोदेवस्य धीमह्यभिदधति धियो योन इत्यौर्वतेजः ।
तुर्यं सर्वाणि भूतान्यधिगतममलं सर्वतो दृक्कमाद्यं
ध्यायामि ध्येयमन्तःकरणसुनियतैर्योगिभिश्श्रीमहेश ॥८७॥

कालोऽनन्तो युगात्मा शिवदिवसनिशाः पक्षमासास्तथाब्दा-
स्तद्भेदाष्षड्तुस्थास्तदनुगतजगत् सर्ववृत्तान्तभेदाः ।
नानायज्ञक्रियाश्च त्रिशतिदितिसुता मानुषास्सर्वनागा-
योगीन्द्राजीवसङ्घास्तवचरणयुगे यान्ति जन्मान्तमध्यान् ॥८८॥

भूतं भव्यं भविष्यत्त्रिभुवनभवने षण्महाशक्तिभिस्त्वं
तत्सर्वं व्यश्नुवानो विचरसि कलितः सृष्टिगव्यन्तकामैः ।
देवैर्दैत्यैर्मनुष्यैरुरगपतिकुलैस्सर्वजीवप्रधानै-
रात्मीयैश्चित्रिताङ्गश्शिवभवतमसस्सूर्यभास्त्वं परास्तूत् ॥८९॥

श्रोतास्पर्शीनियंतानवरसरसिकस्सर्वगन्धान्तरज्ञो
वक्ता कर्ता च गन्ता त्रिभुवनभवतो विश्वसर्गः प्रमोदी ।
कामी मीमांसकश्च प्रथितशुचिशिखा सप्तकव्याप्तविश्वो
बोद्धास्वार्थाननन्तानधिगतचरणस्सर्वतस्त्वं शिवोसि ॥९०॥
सर्वार्थी सर्वनामा सकलकुलपतिस्सर्वलोकाङ्गनेश-
श्शृङ्गारी सर्वभोगी नवरसरसिकः प्राज्यसाम्राज्यभोक्ता ।
त्रैलोक्ये वाक्प्रपंचे प्रवचनपठितस्सोमयाजी च यज्ञ-
स्संसारी कामचारी त्वनुवदतिजनो यस्सधन्यश्शिवत्वाम् ॥९१॥

क्षेत्रं क्षेत्रप्रमाताशिवगुरुवदनाघोरविद्याधिदेवो
मन्त्रो मन्त्रादिदेवो मखविधिरघो योगयोग्यः पदार्थः ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

त्वं दर्शः पूर्णमासः परिधिरपि मखाचार्यपयश्चं होतो-
दुगाताध्वर्युश्च हव्यं त्रिविधहुतवहस्त्वां विना नास्ति शम्भो ॥९२॥

क्षेत्रज्ञास्सर्वदेवास्सुरनरभुजगास्सर्वजीवाश्च तच्च
क्षेत्रं ब्रह्माण्डरूपं त्रिभुवनभवनव्यापकं चित्ररूपम् ।
एतावद्व्याप्य तत्र स्थितमखिलजगद्रक्षभोक्तारमग्नि
ज्ञात्वा षट्छक्तिभिस्त्वां परमशिव महामृत्युमत्येति विद्वान् ॥९३॥

उक्तक्षेत्राधिदेवे परतरपुरुषे त्वय्यनन्तस्वरूपे
दिव्याम्नायागुरूक्ता निजनिजनियतिस्सूक्तयस्सर्ववेदाः ।
साङ्गोपाङ्गाश्च शास्त्राण्यधिगतमहिमान्योन्यसिद्धान्तविद्या-
भाषास्वार्थैर्विभान्ति त्रिनयनभवतो विश्वमूर्तेः परः कः ॥९४॥

मूलं व्योमैववायुज्वलनजलधारा समध्यमं यस्य शाखा-
देवाः पर्णानि दैत्याः किसलयनिचया मानुषाश्च प्रतानाः ।
नागाः पुष्पाणि वा ते बहुविधतनवो विश्वसस्यं प्रबोधो
विश्वन्यग्रोधकद्रोः परमशिव भवान् बीजभूतो विभाति ॥९५॥

मायारूपेण कालो जननमरणकृत्सर्वजीवाङ्गवृत्ते-
र्विद्यारूपेण कालान्तक इति विनुतस्सत्वमेवापरो न ।
देहाहङ्कार एवान्तक इति गुरुणा यः प्रविज्ञाय मायां-
जागर्त्यात्मप्रबोधे शिवतवकृपयास्तोत्रमृत्युंजयस्स्यात् ॥९६॥

त्वं नाथस्त्वं परपदजनिताम्नाय विद्यार्थकोश-
स्त्वं शम्भुस्त्वं परेशः परतरमहिमा त्वं परा त्वं पराश्रीः ।
त्वं भानुस्त्वं सुधांशुस्त्वमपि च जननी त्वं पिता त्वं सुमित्र-
स्त्वं भ्राता बान्धवास्त्वं त्वमसि धननिधिस्त्वां विना नास्ति
मेऽन्यः ॥९७॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

शब्दार्थाधारभूतं त्रिभुवनजनकं सर्वतोदिक्कसत्त्वं
त्रैलोक्यस्थायिलिङ्गात्रयविदितपदं सर्वतत्त्वैकवेद्यं ।
सर्वानिर्वाच्यसत्ता गतपरविभवज्योतिरुज्जृम्भमाणं
व्यक्तीकृत्यात्मवर्णैः प्रकटयसि परं तत्त्वमात्मीयमग्ने ॥९८॥

त्वं विश्वं विश्वहेतुर्विरहितकरणो विश्वकार्यैककर्ता
विश्वातीतश्च विश्वेश्वर इति बहुधा निश्चतश्चाक्षरज्ञैः ।
अद्वैतात्मप्रबोधानलबहुलशिखार्चितात्मीयहव्य
श्रीशम्भो विश्वशक्त्या परतरवियति प्रेषि निर्वाणपूजाम् ॥९९॥

एवं यस्स्तौति भूतिं त्रिभुवनमहतीं विष्वगाश्चर्यचर्या-
मन्तर्बाह्यागमोक्तिप्रविनुतविभवामादिमध्यान्तहीनाम् ।
सौम्योग्राकारदेवासुरनरभुजगानेकजीवप्रभेदो-
त्पत्तिस्थित्यन्तभूमिस्स भवति जगताश्चर्यवानेव शम्भो ॥१००॥

इति श्रीपरशम्भुमहिम्नि महाविभूतिप्रकरणं दशमम् ॥

का पूजा पूजकः कश्शिवगुरुरिति कः को विधिः कश्चमन्त्रः
कः पीठः किं प्रसूनं किममलसलिलं केऽत्र सर्वोपचाराः ।
निर्द्वन्द्वस्यात्मनस्ते द्वयमिति रचितं सर्वमेतत्कथंस्या-
त्सन्पोषार्थं महेश त्रिचरणविमलज्ञानपूजाप्रसन्नः ॥१०१॥

त्रैलोक्यं सर्वतस्ते सकलजगदिदं व्यश्नुवानात्मसत्ता
विस्फूर्तेरष्टमूर्तेरखिलजनमनः प्रोच्चसिंहासनस्य ।
कस्मादावाहनं स्याद्बहिरिहचरितं क्वासनं चन्द्रमौले
मायासंसारभावो रचयति नितरामात्मभोगायभेदम् ॥१०२॥

आधारोग्निस्सुपात्रं रविरमृतकलानायकः पूर्णमद्यं
शक्तिस्त्वं वै प्रपूज्यष्षडवयवयुतस्तत्रपात्रप्रवर्ग्यें ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

पाद्यं ते तर्पणं च प्रभवति सुमुदे बाह्ययागार्घ्यपात्रैः
सन्तुष्टस्स्याः कथं त्वं परशिवविमलज्ञानदुग्धाब्धिशायिन् ॥१०३॥

भास्वच्चन्द्राग्निबिम्बोदितविमलशिवज्ञाननित्यप्रमोद-
ज्ञानानन्दप्रवाहास्त्रिगुणितसरितो मुख्यनाडीत्रयस्थाः।
कालिन्दी जह्नुकन्यान्तरसरिदभिधास्तेतनुस्नानकृत्ये
सृष्टाहृल्लिङ्गमूर्ते कथमितरकृतैःस्यात्तवस्नानमत्र ॥१०४॥

लज्जारागादिमायातिमिरदिनकरी भूतचेतः प्रबोध-
ज्योतिःपुञ्जे प्रवृत्ते गतभवतमसो दिक्पटालंकृतस्य।
प्रज्ञायज्ञोपवीतैरुपचितवपुषः प्रेतभस्माङ्गराग-
स्यान्ये मिथ्योपचारास्तवसवनमहासूत्रबन्धानुलेपाः ॥१०५॥

सर्वाहिंसेन्द्रियाश्वद्रुतगतिशमनं सर्वभूतानुकम्पा
शान्तिस्सत्यं प्रबोधो गुरुकथिततपोनिश्चलध्यानदृष्टिः।
श्रद्धाभक्तिश्च नित्यं निजविषयपरित्यागितानिस्पृहत्वं
संवित्पूज्योतिपुष्पाण्यमलशिव भवत्पूजनाय क्रियन्ते ॥१०६॥

ब्राह्म्याद्यामातरोष्टौ स्वविषयकुसुमैरात्मभावप्रसूनै-
र्योगिन्यश्शक्तयस्ते निजनिजनियतिस्फूर्तिसन्मञ्जरीभिः।
तद्भावं भावयद्भिस्त्वकिरणमहाभैरवैरात्तसङ्गा-
स्त्वां श्रीचिद्भैरवेशं परमशिवगुरुं पूजयन्ति स्मरन्ति ॥१०७॥

सद्विद्याङ्गारमध्यार्चितसततमहावासनाभ्यासधूपै-
श्श्रीमद्वक्त्रारविन्दोदितसकलकुलाम्नायबाधप्रदीपैः ।
सर्वाक्षार्थान्निभेदैरुपरचितमहादिव्यनैवेद्यपानै-
राराध्यो योगिभिस्त्वं कथमितरकृतैस्तोष्यसे श्रीपरेश ॥१०८॥

इति श्रीपरशम्भुमहिम्नि अन्तर्यागोपचारपरामर्शप्रकरणमेकादशम् ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

विद्यानानाविभूषा मृगमदघनसारादि सौरभ्यवस्तु-
प्रोत श्रीचन्दनानि प्रविकचकुसुमान्यद्भुतान्यम्बराणि ।
नानामोदाश्चधूपाः क्रमुकशकलवद्वीटिकाः पादभेदा-
न्नानापात्राणि भ्राम्यापरशिवभवतः पूजनायक्रियन्ते ॥१०९॥

सप्तैते मन्डलस्थाश्चरुजलनिधयो दिव्यनैवेद्यराशि-
र्नानापक्वान्नभेदान्विविधपिशितवच्छाकनानोपदंशान् ।
भक्ष्यं भोज्यं च शोष्यं विविधशशिसुधास्वादुवद्वस्तुलेह्यं
ह्यालादध्याज्यदुग्धान्यपि विदधति ते सूपहाराय शम्भो ॥११०॥

मन्त्राकारैः प्रदीपैर्दहनरविकलानाथनक्षत्रमाला
विद्युन्माणिक्यमुक्तारजतकनकधात्वादिनानाप्रकाशैः ।
युष्मनन्नीराजनाये विरचितरचनास्त्वां प्रकाश्यात्ममूर्ति
सर्वानन्दात्मरूपं परमशिवगुरुं भावयन्त्योर्वतेजाः ॥१११॥

मुद्रानानार्थपोषानर्तिपथचलिता नष्टयोगांश्च नाट्यं
तीर्थाक्रान्तं प्रणामं निजकरणगतिं सर्वसिद्धान्तवाचः ।
कर्माज्ञानप्रवाहाव्यजनमपि महाचामराण्यातपत्रं
हस्त्यश्वादत्रिथांस्ते परशिवचरणाभ्यासदास्यं विधत्ते ॥११२॥

आकाशश्शब्दभेदैः प्रलयजलधरामन्ददंभलिजृम्भै-
र्भेरीनिस्साणवाद्यैर्दरनिकररवैर्भूरिघण्टानिनादैः ।
तालैर्नालैर्मृदंगैर्मुरजडमरुकैर्गीतसद्वल्लकीभि-
स्सर्वैर्वाद्यप्रभेदध्वनिभिरिह विभो नाथ पूजां करोति ॥११३॥

शाम्भव्यो रश्मिदेव्यस्समरसमुदितामातृकावर्णरूपा
भास्वन्तो भैरवाष्टावपि सरसकलावानमत्ताः क्रमस्थाः ।
वेदान्तैरागमान्तैरभिदधति परं शाम्भवं वैभवं ते
सर्वानिर्वाच्यसत्तावियदुदितपदं श्रीविभो विश्वमूर्ते ॥११४॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

योगिन्यः क्षेत्रपालास्सरसमधुमदावेदशास्त्रार्थतत्त्व-
व्याख्यानध्यानवक्त्राः पितृवनदशदिग्वृक्षगा भैरवाश्च ।
सोधास्वादप्रमत्तः प्रकटितविकटाटोपसिंहाट्टहासा-
स्स्वस्वव्यापारपुष्पैः परमशिवगुरुं त्वां विभो पूजयन्ति ॥११५॥

भूताः प्रेताः पिशाचास्स्वविकृतिविभवैः प्रासबीभित्सवेषा
योगिन्यस्तेश्मशानावरणगतमहादेवता भासयन्त्वि ।
देवास्ते पूर्वदेवामधुरसमुदिता विस्मयाविष्टचित्ता-
श्शान्ता ध्यायन्ति गायंत्यपि परमशिव त्वां मुदोपासतेच ॥११६॥

ब्रह्मावेदोक्तिगानैर्हरिरपि कमलैस्ताण्डवैश्चन्डरुद्र-
स्सूर्यश्च्यामहेन्द्रो निजनिजविषयेरन्यदिक्पालदेवाः ।
सिद्धास्सर्वे मुनीन्द्रस्स्तुतिनतिवचनैस्सर्वदुर्गागणेशा
नृत्तैर्वाद्यप्रभेदैर्विदधति सुमुदन्ते महादेव शम्भो ॥११७॥

सन्तप्तः प्रेतसिंहासनविहितमहाभैरवश्शाम्भवाग्निः
पंचाशद्विष्णुलिङ्गाक्षरविदितपराघोरविद्योततेजाः ।
सत्यान्तर्यज्ञदेवास्त्रिभुवनहविषातोषितात्मीयरश्मि-
र्वागर्थौ वक्रभावात्सकलमिहतनुं व्यश्नुवानो विभाति ॥११८॥

सर्वज्ञानैकभूमिस्त्रिभुवनकरवीराख्यशून्यश्मशान
ज्ञानाकूपारपूरश्रुतिमखवहुविच्छास्त्रबोधोदवाहान् ।
प्रज्ञां गाम्भीर्यगर्वग्रसतिरविरिव स्वप्रकाशात्प्रकाशा-
न्नानाभेदोड्डुमुख्यान्निबिडतररुचिश्चर्न्तपूरांस्तवाग्निः ॥११९॥

श्रीशम्भो विश्वमूर्ते परमशिवगुरो नाथविश्वेश्वरात्म-
न्नेषामेतेऽर्थवत्स्यात्प्रसवविरचिता स्रग्धरावृत्तपूजा ।
त्वय्येव ज्ञानवह्नौ हुतवहरसनेसंहृतामुक्तये मे
भूयादागः क्षमस्व प्रवचनपठितश्रीविभो मे प्रसीद ॥१२०॥

इति श्रीपरशम्भुमहिम्नि विशेषोपचारपरामर्शे शान्तिप्रकरणं द्वादशम् ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

इतितवक्तपादोग्ध्रीपूजा सुभक्तिविनिस्सृता-
जननमरणप्रादुर्भावप्रभेदपटीयसी ।
जनयति मुदं ब्रह्मानन्दप्रवाहतरंगिणीं
दहति विपदः पुण्यं पापं दुरन्तभवाटवीम् ॥१२१॥

परशिवममजन्मधन्यमेतत्तवमहिमस्तुतिमोचितो यतोहम् ।
कुलमिदमखिलं द्विधाविभिन्नंपरमपदं गतमेव ते प्रसादात् ॥१२२॥

हतो मायामृत्युर्गुरुवदनखङ्गेनमहसः
प्रभिन्नं मालिन्यं व्यपगतमहंकारतिमिरम् ।
हतामे कामाद्याः प्रबलरिपवस्स्वात्मविषया
महेश त्वत्सेवाविदितसुविवेकाग्निमहसा ॥१२३॥

जातिर्लज्जानिजकुलमदस्सर्वसंशित्वराधि-
र्देहाहन्ता स्वकृतदुरितद्वन्द्वपाशोभिमानः ।
सर्वे ह्येते ममविनिहतास्त्वन्महावाक्यसूर्य-
ज्योतिःपुंजैः किमपरमहं देवभद्रं समीहे ॥१२४॥

मद्विद्याभ्यसनमभूदिहैव सार्थं
सान्निध्यात्तवचसदुक्तिगोचरस्य ।
अद्य त्वं त्रिभुवनवाङ्मस्य वाच्यो·
निर्बाधस्सकलपथैकगम्यमूर्ते ॥१२५॥

श्रुति स्मृतिमिथः पथे प्रचलितोऽहमेकां
ततः प्रभो शिवगुरो तव त्रिजगदुन्नताज्ञां गतः ।
भजायि परपावकं त्रिजगदात्महव्याशिनं
भवन्तमधिदेवतं भव वने ज्वलन्तं स्वतः ॥१२६॥

ब्रह्मत्वं सुरनायकत्वमखिलं क्षोणीपतित्वं लस-
द्ब्राह्मण्यं सुरयक्षनागपितृता गन्धर्वता सिद्धता ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

एतत्सर्वमनित्यमेव गणितं नाहं समीहे सुखं
किंतु त्वत्पदपद्मनिश्चलतरध्यानं समीहे विभो ॥१२७॥

संप्राप्ता कृत्यकृत्यता सफलता वाचां तव स्तोत्रता
मृत्योरप्रमितेश्च मृत्युरभवं वश्यं गतं त्वत्पदम् ।
संसारानवधिप्रचण्डजलधिस्तीर्णः प्रमोहो हृतः
पुण्यं पापगमाद्विनाशमिह मे प्राप्तः प्रबोधो विभो ॥१२८॥

इति परशिवशम्भोनन्तकान्ते महिम्न-
स्तवविरचितमेतत् स्तोत्रमात्मोक्तिशक्त्या ।
प्रभवतु समुदे ते त्वं मम स्वांतवर्ती
भवभवगतदुःखं छिन्धि चागः क्षमस्व ॥१२९॥

यावांस्ते जीवलोकः परशिवचतुराशीति लक्षैकसङ्ख्य-
स्तत्तत्कर्मप्रभेदोपगतजनिमृती घोरसंसारचक्रे ।
सृष्टिस्थित्यन्तवृत्तिं भजति निरवधित्वत्पदध्यानयुक्तं
दृष्ट्वैनं भीतभीतं शरणमुपगतं त्राहि मां देव मृत्योः ॥१३०॥

दुर्वासास्सत्यवासः कनकगिरिरहं कन्दरे मे हृदाख्ये
श्लोकाश्चैते मृगेन्द्राः पटनखदशनाशाम्भवोत्थैकवीर्याः ।
मायाध्वान्तेभयूथप्रदलनपटवो ब्रह्मविद्यागवीस्ता
वक्तॄन् श्रोतॄन् प्रमातॄन् निजहृदयगुहाब्रह्मसत्तां नयन्ति ॥१३१॥

भूष्यं वैदुष्यमुद्यद्दिनकरकिरणाकारमाकारतेजः
प्रज्ञानं भूरिमानं निजकरिकलिलं दुर्गमं योगमार्गम् ।
आयुष्यं ब्रह्मपोष्यं हरगिरिविशदां कीर्तिमभ्येत्य भूमौ
देहान्ते ब्रह्मपारं परशिवचरणाकारमभ्येति विद्वान् ॥१३२॥

ये श्रीशाम्भवशासने कृतधियश्श्रीशासने कर्मठा-
श्श्रौतस्मार्तविधिष्वमन्दमतयस्सत्यव्रताब्राह्मणाः ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

विद्वांसस्सकलागमेषु च कलाविद्यासु ते शाम्भव-
ब्रह्मप्राप्तिमवाप्नुवन्ति पठनाच्छम्भोर्महिम्नस्स्तुतेः ॥१३३॥

स्तोत्रं चैतत्पठेद्यश्शिवगुरुवदनाघोरविद्यात्तदीक्ष-
स्सत्यज्ञानप्रकाशात्प्रबलभवरिपुं पुण्यपापाद्यविद्याम् ।
भित्वा मुक्तो विकल्पस्त्रिजगति महितं सौख्यमात्मप्रबोधं
तेजः कीर्तिं च लक्ष्मीमभिलषितपदं व्यश्नुते स्तोत्रवीरम् ॥१३४॥

महिम्नस्स्तोत्रस्य त्रिभुवनगुरोस्तेचपरतः
पराशक्तेस्तत्त्वं परशिवपदं वेत्ति स बुधः ।
अगाधं गाम्भीर्यं स्तुतिगतमनन्तप्रणुतिजं
समस्तास्सिद्धीरप्यनुभवति गच्छेत्परपदम् ॥१३५॥

श्रीक्रोधभट्टारकदिव्यनाम्ना दुर्वाससासूक्तमहामहिम्नः ।
स्तोत्रं पठेद्यो भुवनाधिपत्यं नित्यं गुरुत्वं शिवतामुपैति ॥१३६॥

महेशान्नापरो देवो महिम्नो नापरा स्तुतिः ।
अघोरान्नापरो मन्त्रो नास्ति तत्त्वं गुरोः परम् ।.१३७॥

सदसदनुग्रहनिग्रहगृहीतमुनिविग्रहो भगवान् ।
सर्वासामुपनिषदां दुर्वासा जयति देशिकः प्रथमः ॥१३७॥

श्री गुरुकरुणालक्ष्यो यः कोप्यात्मविदनुग्रहीतिपरः ।
परशम्भुस्तुतिबोधो जलजाधारो भवेत्सदा धीरम् ॥१३९॥

परशम्भो स्तवपद्यं रविप्रकरणं पठन् त्रिकालेऽपि ।
रविरिवजगत्प्रकाशो मतिचातुर्याज्जगद्गुरुर्भवति ॥१४०॥

तस्मात् स्मृतिमतिबुद्धिप्रज्ञावानात्मविन्महादेवः ।
परशम्भो स्तवहृदयं सत्पात्रेषु प्रकाशयेत्सदयम् ॥१४१॥

श्रीक्रोधभट्टारकापरनाम्ना महामहिम्ना दुर्वाससामुनीश्वरेणविरचिता
परशम्भुमहिम्नः स्तुतिस्सम्पूर्णा ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

